भूमिपालसहस्राणां मध्ये पाण्डुमविन्दत ॥ २
स तया कुन्तिभोजस्य दुहित्रा कुरुनन्दनः ।
युयुजेऽमितसौभाग्यः पौलोम्या मघवानिव ॥ ३
यात्वा देवव्रतेनापि मद्राणां पुटभेदनम् ।
विश्रुता त्रिषु लोकेषु माद्री मद्रपतेः सुता ॥ ४
सर्वराजसु विख्याता रूपेणासदृशी भुवि ।
पाण्डोरर्थे परिक्रीता धनेन महता तदा ।
विवाहं कारयामास भीष्मः पाण्डोर्महात्मनः ॥ ५

सिंहोरस्कं गजस्कन्धमृषभाक्षं मनस्विनम् ।
पाण्डुं दृष्ट्वा नरव्याघ्रं व्यस्मयन्त नरा भुवि ॥ ६
कृतोद्वाहस्ततः पाण्डुर्बलोत्साहसमन्वितः ।
जिगीषमाणो वसुधां ययौ शत्रूननेकशः ॥ ७
पूर्वमागस्कृतो गत्वा दशार्णाः समरे जिताः ।
पाण्डुना नरसिंहेन कौरवाणां यशोभृता ॥ ८
ततः सेनामुपादाय पाण्डुर्नानाविधध्वजाम् ।
प्रभूतहस्त्यश्वरथां पदातिगणसंकुलाम् ॥ ९ C. 1. 4450 B. 1. 113. 26 K. 1. 122. 26

---

ददर्श राजशार्दूलं पाण्डुं भरतसत्तमम् ।

[ (L. 2) K$_1$ B$_{1.3.5}$ Dn D$_{1.4}$ व्यावृण्वन्. — (L. 4) B$_1$(m as in text).$_3$ स्वयंवरा. — (L. 5) Ñ$_{1.3}$ राजमध्यस्था; D$_5$ °मध्यस्था. K$_1$ °ज्ञां महात्मनां. — (L. 6) Ñ$_1$ °शार्दूल; Dn$_2$ नृपशा°. ]

2 $^a$) K$_{0.2.3}$ G$_1$ सिंहोरस्कं; K$_4$ Ñ B D °दर्पं (D$_5$ °दीर्घ-). K$_4$ Ñ B D महोरस्कं; S महा(G$_1$ वृष)स्कंधं. — $^b$) K$_{0.4}$ Ñ$_2$ B$_3$ D T$_1$ G (except G$_{2.6}$) वृषभाक्षं. S यश(G$_6$ मन)स्विनं. — After $2^{ab}$, S ins.:

1130* पतिं वव्रे महेष्वासं पाण्डुं कुन्ती यशस्विनी ।

[ G$_{1.5}$ °स्विनं. ]

— $^{cd}$) S °स्राणामग्रतः स तया वृतः. — For it, K$_4$ Ñ B D subst.:

1131* आदित्यमिव सर्वेषां राज्ञां प्रच्छाद्य वै प्रभाः ।
तिष्ठन्तं राजसमितौ पुरंदरमिवापरम् ।
तं दृष्ट्वा सानवद्याङ्गी कुन्तिभोजसुता शुभा ।
पाण्डुं नरवरं रङ्गे हृदयेनाकुलाभवत् ।
ततः कामपरीताङ्गी सकृत्प्रचलमानसा ।
व्रीडमाना स्रजं कुन्ती राज्ञः स्कन्धे समासृजत् ।
तं निशम्य वृतं पाण्डुं कुन्त्या सर्वे नराधिपाः ।
यथागतं समाजग्मुर्गजैरश्वै रथैस्तथा ।
ततस्तस्याः पिता राजन्नुद्वाहमकरोत्प्रभुः ।

[ (L. 1) D$_3$ राज्ञां पौढोथवा विभो (sic). — (L. 6) Ñ$_2$ B$_{1.3.6}$ Da Dn$_1$ D$_{4.5}$ समासजत्. — (L. 9) Ñ$_2$ Dn D$_1$ विवाहम्. ]

3 S om. $3^{ab}$. — $^a$) D$_2$ समये (for स तया). — $^b$) Ś$_1$ K$_4$ Dn D$_{1.5}$ °नंदन. — $^c$) S °जे भरतश्रेष्ठः (G$_4$ °ष्ठ; G$_5$ °ष्ठं).

☞ For 4–7, K$_4$ Ñ B (B$_6$ om. line 3) D (D$_5$ om. line 1) subst. a passage of 56 lines (with an additional colophon after line 7) given in App. I (No. 61). Particulars of the colophon are as follows. — *Adhy. name* K$_4$ Ñ$_3$ B Da D$_{2.4.5}$ कुंती विवाहः. — *Adhy. no.* B$_1$ Dn 110 (Dn$_3$ 111); Da$_1$ 108; D$_{2.4}$ 112. — *S'loka no.:* Dn 13. — *Aggregate s'loka no.:* Dn$_2$ 4470.

4 For K$_4$ Ñ B D see above. — $^a$) K$_0$ गत्वा; **Cd** यात्वा (as in text). — The reading यात्वा of **Cd** suggests that Dev. had before him the shorter (text) version, and not the (inflated) version of the vulgate given in App. I, a surmise confirmed by his citing $7^{ab}$ *in toto*; cf. v. l. 1. 68. 72.

5 For K$_4$ Ñ B D cf. v. l. 3 — $^a$) G$_3$ सर्वराजन्यवि°. — $^b$) G$_{1.6}$ °सदृशा. — $^c$) Ś$_1$ K$_{1.3}$ परिक्रीय; S धनुष्क्रीता. — $^d$) S मद्रराजेश्वरात्मजा.

6 For K$_4$ Ñ B D cf. v. l. 3. Cf. $2^{ab}$ also. — $^a$) G$_1$ सिंहदंष्ट्रं. S महेष्वासं (G$_1$ महास्कंधं) (for गज°). — $^b$) K$_0$ S वृषभाक्षं. Ś$_1$ तपस्विनं; T G$_{1-4}$ M$_{6-8}$ यश°. — $^c$) K$_0$ S दृष्ट्वा पांडुं (by transp.). K$_1$ T$_2$ °व्याघ्र. — $^d$) K$_0$ विस्मयंत. K$_1$(before corr.)$_{.3}$ नराधिपाः.

7 For K$_4$ Ñ B D cf. v. l. 3. — **Cd** cites $7^{ab}$ *in toto* exactly as in text, a line unknown to the Newārī, Bangālī and Devanāgarī versions; cf. v. l. 4. — $^a$) S (except G$_6$) तदा (for ततः). — After $7^{ab}$, S ins.:

1132* गोप्ता भरतवंशस्य श्रीमान्सर्वास्त्रकोविदः ।

8 $^a$) Ś$_1$ K$_1$ °मागस्कृतं; D$_5$ °मार्गं ततो; G$_3$ °मागस्कृता. D$_4$ यात्वा; G$_3$ भू°. — $^b$) S (except G$_5$) हताः (M$_3$ *sup. lin.* जिताः as in text).

9 $^a$) T G (except G$_{5.6}$) उपागृह्य(T$_1$ °ह्न)त्. For it D$_2$ subst. $11^a$. — $^b$) K$_4$ B$_{1.3.6}$ Da D$_2$ पांडुना विविध°. — $^{cd}$) Da °श्वभूतां; Dn D$_1$ °श्वयुतां. K$_4$ Ñ$_{1.2}$ B D$_{2.4}$ °जनसंकुलां; Ñ$_3$ °शत°; Da Dn D$_1$ °रथ°. S

C. 1. 4451 B. 1. 113. 27 K. 1. 122. 27 आगस्कृत्सर्ववीराणां वैरी सर्वमहीभृताम् ।
गोप्ता मगधराष्ट्रस्य दार्वो राजगृहे हतः ॥ १०
ततः कोशं समादाय वाहनानि बलानि च ।
पाण्डुना मिथिलां गत्वा विदेहाः समरे जिताः ॥ ११
तथा काशिषु सुह्मेषु पुण्ड्रेषु भरतर्षभ ।
स्वबाहुबलवीर्येण कुरूणामकरोद्यशः ॥ १२
तं शरौघमहाज्वालमस्त्रार्चिषमरिंदमम् ।
पाण्डुपावकमासाद्य व्यदह्यन्त नराधिपाः ॥ १३
ते ससेनाः ससेनेन विध्वंसितबला नृपाः ।
पाण्डुना वशगाः कृत्वा करकर्मसु योजिताः ॥ १४
तेन ते निर्जिताः सर्वे पृथिव्यां सर्वपार्थिवाः ।
तमेकं मेनिरे शूरं देवेष्विव पुरंदरम् ॥ १५
तं कृताञ्जलयः सर्वे प्रणता वसुधाधिपाः ।
उपाजग्मुर्धनं गृह्य रत्नानि विविधानि च ॥ १६
मणिमुक्ताप्रवालं च सुवर्णं रजतं तथा ।
गोरत्नान्यश्वरत्नानि रथरत्नानि कुञ्जरान् ॥ १७
खरोष्ट्रमहिषांश्चैव यच्च किंचिदजाविकम् ।
तत्सर्वं प्रतिजग्राह राजा नागपुराधिपः ॥ १८
तदादाय ययौ पाण्डुः पुनर्मुदितवाहनः ।
हर्षयिष्यन्स्वराष्ट्राणि पुरं च गजसाह्वयम् ॥ १९

समृद्धहय(G4 °रथ)पादाता(T1 समृदंगरवोपेता)मप्रमेयरथद्विपां (G3 °रथाधिपाः). — After 9, S reads 12.

10 $^{a}$) Ś1 K0–3 Ñ3 D5 बहूनामागसां (Ś1 °मां; K1 °तां) कर्ता; K4 Ñ1.2 B Da Dn D1.2.4 आगस्(Ñ1 आज्ञा)कारी महीपानां (K4 °पालो). — $^{b}$) Ś1 K1–3 °धनुर्भृतां; K0 D5 G1.5m.6 °महीक्षितां; Ñ3 T1 G5 °कुरुक्षितां. K4 Ñ1.2 B Da Dn D1.2.4 बहूनां बलदर्पितः. — D5 om. 10$^{c}$–11$^{d}$. — $^{c}$) K4 S म(G5 मा)गधवंशस्य; Ñ3 B (except B1) °राज्य(Ñ3 °ज)स्य. — $^{d}$) K2 दार्घो; Ñ2 B6 Dn D1.4 दीर्घो; D2 राजा. Ś1 K1 ततः; Da जि° (for ह°).

11 D5 om. 11 (cf. v. l. 10). — $^{a}$) B Da कोषं. — $^{b}$) K4 Ñ1.2 B D (D5 om.) वाहनानि च भूरिशः. — $^{c}$) T1 G3.6 M (except M3) यात्वा (for ग°). — $^{d}$) S मैथिलाः (for विदे°). T M5 °रे हताः.

12 S reads 12 after 9. — $^{a}$) K3 D5 ततः. K0.2 कण्वेषु; Ñ3 काचे°. K0.2 D4 पौं(D4 पुं)ड्रे° (for सुह्म°). S हताः (G5.6 °त्वा) काशिषु वंगे(T2 G5.6 °के)षु. — $^{b}$) K0.2 पांड्येषु; K4 Ñ B1 D2 T2 G4 पौंड्रे°; G5(m as in text).6 सुते°. K0.1.3 Ñ3 Da Dn D1 च नरर्षभ; D4 T G M3–5 च नरा(T1 वसुधा)धिपाः. M6–8 पुंड्रकेषु नराधिपाः. — $^{c}$) K4 Ñ1.2 B D2 विजित्य पृथिवीपालान्.

13 M3 om. 13–14. — $^{a}$) B5 °महाज्ञानम्; S (except T2 G6; M3 om.) °वेगम्. — $^{b}$) Ñ3 D (except D2.4.5) शस्त्रार्चिषम्. S अस्त्रज्वलितपावकं. — $^{cd}$) S पांडुमासाद्य राजानो न शेकुरतिवर्तितुं.

14 M3 om. 14 (cf. v. l. 13). — $^{a}$) Ś1 K1.2.4 D5 ते समेताः. Ś1 समासेन; K1 स्वमंते°; K2.4 D2 ससैन्ये°; D5 पुरा ते°; T1 G1.2.4–6 M (M3 om.) स्व(G5.6 स्स)याते°. K3 तेन सेनासमेतेन; G3 तेस्य सेनास्त्रघातेन. — $^{b}$) S °सितमहाबलाः. — $^{c}$) K1 वशमानीय; K4 स्ववशीकृत्य; Ñ1.2 B D2.4 करदीकृत्य; S (M3 om.) पृथिवीपालाः (for वशगाः कृ°). — $^{d}$) N कु(K2 का)रुकर्मसु.

15 For 15$^{ab}$, Ś1 K1 repeat 12$^{ab}$! — $^{b}$) Ñ1 पृथिवीपते; Ñ2 B (B5m as in text) D2.4 पृथिवीक्षिताः (for सर्वे°). — $^{d}$) Ñ1.2 B (except B5) Da D2.4 दैत्या इव पुरं°.

16 M6–8 om. 16–17$^{ab}$. — $^{a}$) Ñ1.2 B वीरं; S (M6–8 om.) शूरं (for सर्वे). — $^{b}$) S (M6–8 om.) आसाद्य. K0 सर्वपार्थिवाः; Ñ1 वसुधातले; G3 मनुजा°. — $^{c}$) S (M6–8 om.) आजह्रुर्धनधान्यानि.

17 M6–8 om. 17$^{ab}$ (cf. v. l. 16). — $^{a}$) S (M6–8 om.) मणिप्रवालमुक्तानि. — $^{b}$) K3 T2 G (except G1) सुवर्ण-. N (except B D2.4) बहु (for तथा). — $^{c}$) G5.6 °न्यश्व(G6 °नि च)मुख्यानि.

18 Ś1 K (except K4) Ñ3 om. 18$^{ab}$. — $^{a}$) Dn °महिषीश्चैव; S °महिषान्गाश्च (T1 °षाणां च). — After 18$^{ab}$, N (except Ñ1) M5 ins. line 2 of 34* (cf. v. l. 1. 1. 87). — Ñ1 om. 18$^{c}$–21$^{b}$. — $^{c}$) Ñ2 सर्वतः प्रति°. — $^{d}$) Ñ2 B Da D2.4 °पुरेश्वरः.

19 Ñ1 om. 19 (cf. v. l. 18). — $^{a}$) Ñ2 B (except B5) D2.4 ततो हृष्टमनाः; T1 तथा विनिर्ययौ. — $^{b}$) Ñ2 B (except B5) D2.4 प्रायान्; S भृशं (for पुनर्). Ñ1 K3 °मानसः. — $^{c}$) K0 S हर्षयन् सर्व(K0 स्वानि)रा°. — $^{d}$) M7 om. 19$^{d}$. G1 पुनश्च. G2 नगसाह्वयं.

20 Ñ1 om. 20 (cf. v. l. 18). M6–8 transp. 20 and 21. — $^{c}$) B (B3 m as in text) Da1 D1 कीर्तितः. K3 प्रनष्टा श्रीश्च कीर्तिश्च; S नष्टा कीर्तिः स्ववंशस्य. — $^{d}$) K3 S पुनरुद्धृता.

शंतनो राजसिंहस्य भरतस्य च धीमतः ।
प्रनष्टः कीर्तिजः शब्दः पाण्डुना पुनरुद्धृतः ॥ २०
ये पुरा कुरुराष्ट्राणि जह्रुः कुरुधनानि च ।
ते नागपुरसिंहेन पाण्डुना करदाः कृताः ॥ २१
इत्यभाषन्त राजानो राजामात्याश्च संगताः ।
प्रतीतमनसो हृष्टाः पौरजानपदैः सह ॥ २२
प्रत्युद्ययुस्तं संप्राप्तं सर्वे भीष्मपुरोगमाः ।
ते नदूरमिवाध्वानं गत्वा नागपुरालयाः ।
आवृतं ददृशुर्लोकं हृष्टा बहुविधैर्जनैः ॥ २३
नानायानसमानीतै रत्नैरुच्चावचैस्तथा ।
हस्त्यश्वरथरत्नैश्च गोभिरुष्ट्रैरथाविकैः ।
नान्तं ददृशुरासाद्य भीष्मेण सह कौरवाः ॥ २४
सोऽभिवाद्य पितुः पादौ कौसल्यानन्दवर्धनः ।
यथार्हं मानयामास पौरजानपदानपि ॥ २५
प्रमृद्य परराष्ट्राणि कृतार्थं पुनरागतम् ।
पुत्रमासाद्य भीष्मस्तु हर्षादश्रूण्यवर्तयत् ॥ २६
स तूर्यशतसंघानां भेरीणां च महास्वनैः ।
हर्षयन्सर्वशः पौरान्विवेश गजसाह्वयम् ॥ २७ C. 1. 4463 B. 1. 113. 45 K. 1. 122. 45

इति श्रीमहाभारते आदिपर्वणि पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

---

21 Ñ1 om. 21ab (cf. v. l. 18). — M6–8 transp. 20 and 21. — a) M7 om. 21a. Ś1 K1 पांडुना कुरु°; S (M7 om.) ये पूर्वं पर°. — b) S परधनानि. — d) Ñ B D करदी°; S वशगाः कृ°.

22 a) S राष्ट्राणि (for राजा°). — b) Ñ1.2 B (except B5) D2.4 राजपुत्राश्च; S भूमिपाला°. K0 सर्वशः. — After 22ab, S ins.:

1133* अभ्यनन्दन्त वै पाण्डुमाशीर्वादैः पृथग्विधैः ।
[ G2 °नंदन् स्तवैः. M6–8 ते (for वै). ]

— c) S प्रसन्नमनसो. G5.6 भूत्वा; M6–8 दृष्ट्वा. — d) S बांधवाः (T1 G2.4 पार्थिवाः) कुरुभिः सह.

23 a) Ś1 च सं°; K1 स्म सं°; Ñ1.2 B D2.4 तमा(B3 °था)यांतं; Da Dn D1 च तं प्राप्तं; S (except G5.6) प्रहृष्टार्थाः (M6–8 °स्ते). — b) S (except M8) °पुरःसराः. — c) K2–4 ते सु(K3 त्व)दूरम्; S ते त्व(G5.6 तु)दीर्घम्. G5.6 इवायांतं. — d) K0 Dn D1 °पुरालयात्; Ñ1.2 B (B5m as in text) D4 °पुराज्जनाः; D2.5 °पुरे (D5 °रं) जनाः. — ef) N (except Ś1) हृष्टा लोकं (Ñ1.3 °का) (by transp.).

24 a) Ś1 K °यानैः; Ñ3 °देश-; G3 °वास-. — b) Ñ3 यानैः (for रत्नैः). K3 शुभैः; Ñ1.2 D (except D2.4.5) तदा; Ñ3 अपि (for तथा). — cd) Da °रथयानैश्च; D1.2 °रथपत्रैश्च. Ś1 अश्वैः (for उष्ट्रैः). K Ñ3 Da Dn D1 त(K1 अ)थाविधैः (Da °श्वभिः; Dn °विभिः; D1 नृभिः); Ñ1.2 B D2.4.5 अजैस्तथा. S अजाविकाश्वसंघानामुष्ट्रगोमहिषस्य च.

25 b) MSS. indiscriminately read कौसल्या and °श°. K0.2 B (except B6) Da D4 T2 G1–3 M (except M5) °नंदि°. — c) G5 तथार्हं. K0 पूज°.

26 a) Dn D1.5 पुर°. — b) B5 कृतास्त्रं; T1 स्वराष्ट्रं. — c) B D (except Da2 D1) पुत्रमाश्लिष्य. Ś1 K1.2.4 Ñ3 भीष्मस्य; Ñ1 B D2.4.5 गांगेयो. — d) Ś1 K1.2 अश्रु प्र(K2 व्य)वर्तत; Ñ1 B D2.4.5 °ण्यपातयत्; Ñ3 °ण्यवर्तत.

27 a) K3 S °संघैश्च (G1 °घोषैश्च; M5 °संघैस्तैः); Ñ1 B5.6 Dn D1.2.4 °शंखानां; B3 Da D5 °संख्यानां. — c) K0 Ñ3 Da S सर्वभूतानि. Ś1 K1–4 हर्षयिष्यन्स्वराष्ट्राणि.

Colophon om. in S. — *Sub-parvan:* Ś1 K1.2.4 Ñ B5 Da Dn1.n2 D1.5 संभव. — *Adhy. name:* K0.3 Ñ1.2 B1 पांडुदिग्विजयः; B3.5.6 D2.4 पांडुविजयः. — *Adhy. no.* (figures, words or both): K0 108; B1 Dn D4 111 (Dn3 112); Da1 109. — *S'loka no.:* Da1 46; Dn 44 (Dn3 45); M3 28.

## १०६

C. 1. 4469
B. 1. 114. 1
K. 1. 123. 1

वैशंपायन उवाच ।
धृतराष्ट्राभ्यनुज्ञातः स्वबाहुविजितं धनम् ।
भीष्माय सत्यवत्यै च मात्रे चोपजहार सः ॥ १
विदुराय च वै पाण्डुः प्रेषयामास तद्धनम् ।
सुहृदश्चापि धर्मात्मा धनेन समतर्पयत् ॥ २
ततः सत्यवतीं भीष्मः कौसल्यां च यशस्विनीम् ।
शुभैः पाण्डुजितै रत्नैस्तोषयामास भारत ॥ ३
ननन्द माता कौसल्या तमप्रतिमतेजसम् ।
जयन्तमिव पौलोमी परिष्वज्य नरर्षभम् ॥ ४
तस्य वीरस्य विक्रान्तैः सहस्रशतदक्षिणैः ।
अश्वमेधशतैरीजे धृतराष्ट्रो महामखैः ॥ ५
संप्रयुक्तश्च कुन्त्या च माद्र्या च भरतर्षभ ।
जिततन्द्रीस्तदा पाण्डुर्बभूव वनगोचरः ॥ ६
हित्वा प्रासादनिलयं शुभानि शयनानि च ।
अरण्यनित्यः सततं बभूव मृगयापरः ॥ ७
स चरन्दक्षिणं पार्श्वं रम्यं हिमवतो गिरेः ।
उवास गिरिपृष्ठेषु महाशालवनेषु च ॥ ८
रराज कुन्त्या माद्र्या च पाण्डुः सह वने वसन् ।
करेण्वोरिव मध्यस्थः श्रीमान्पौरंदरो गजः ॥ ९
भारतं सह भार्याभ्यां बाणखड्गधनुर्धरम् ।
विचित्रकवचं वीरं परमास्त्रविदं नृपम् ।
देवोऽयमित्यमन्यन्त चरन्तं वनवासिनः ॥ १०
तस्य कामांश्च भोगांश्च नरा नित्यमतन्द्रिताः ।
उपजह्रुर्वनान्तेषु धृतराष्ट्रेण चोदिताः ॥ ११

### 106

1 Ś1 K1 S om. उवाच (T2 M8 om. the ref.). — b) B5 °बाहूपार्जितं. B (except B5) Da D2.4 वसु (for धनम्). — d) S तत् (for सः).

2 a) Da D5 M6–8 स वै; D2 अथ वै. T1 वै सर्वं. — b) T1 वीर्यवान्; G5 वै धनं. — c) T1 विदुरश्चापि. — d) M6–8 समतोषयत्.

3 a) K3 Ñ3 D (except Da2) S सत्यवती. Ñ3 B (B1m as in text) D (except D5) M6–8 भीष्मं. — b) Here and below MSS. indiscriminately कौसल्या-, °श°, °शि°. Ñ3 S कौसल्या—°स्विनी. — c) T1 पराहृतैः; T2 G2–4 पांडुहृतैः. Ñ2 B3 Dn D1 S (except G5 M5) अर्थैः. — d) K4 तर्पया°. S भृशं तुतुषुराहृतैः (T2 G4 °वृताः).

4 d) M रथर्षभं.

5 After $5^{a}$, G1.2.4 ins.:

1134* पाण्डोर्बाहुविनिर्जितैः ।
असंख्येयैर्धनै राजा.

— c) T2 G3 °मेधमखै°; M3 °मेधवरै°.

6 a) K1 B1 D2 S Cd (the first) च (as in text); the rest तु. — b) K3 पुरुषर्षभः; S सततं नृपः. — c) Ñ1 S (except G6) जितेंद्रियः. Cd cites तंद्री. Ś1 K G1 Cd तथा (Ko °तः). — d) Ko मृगयापरः (cf. $7^{d}$); Cd वनगोचरः (as in text).

7 Ś1 K1 (hapl.) om. 7; G1 (? hapl.) om. $7–9^{ab}$. — a) S (G1 om.) °पंक्तीश्च. — b) Ñ1.3 B5 D4 शुभान्याभरणानि च. — c) S (G1 om.) चापपाणिर्मृगान्निघ्नन्. — d) Ko वनगोचरः (cf. $6^{d}$); Ñ1 °रतः; Ñ2 °रतिः; G3 °यां गतः.

8 G1 om. 8 (cf. v. l. 7). — a) Ko स वसन्. D5 णे पार्श्वे. — b) D5 रम्ये. — c) S (G1 om.) °श्रृंगेषु. — d) K1 S (except M3.5; G1 om.) °साल°.

9 G1 om. $9^{ab}$ (cf. v. l. 7). — a) S (G1 om.) बभूव कुंत्या. D5 राजा कुंत्या च माद्र्या च. — b) D (except D2.4.5) वने चरन्; S (G1 om.) वनेचरः. — cd) S गज(G1.5.6 द्विप)राजः करेणुभ्यां यथा मध्यगतस्तथा.

10 a) S चरंतं. Ko पत्नीभ्यां. — b) Ñ1.2 B3 D (except D2.4.5) खड्गबाण° (by transp.). — e) Ko °मित्यजानंत. — f) S (except T1) चरंतो.

11 b) D4 देशम् (for नित्यम्). Ś1 चारा निन्युरतंद्रिताः; K1 सेवका व्याहृतंद्रिताः (sic). — T1 om. $11^{cd}$. — c) Ś1 उपा°; G M अनु°. — d) S (T1 om.) °राष्ट्रप्र-. Ko.4 नोदिताः.

☞ The arrangement of the subject-matter of the 9 adhy. 106–114 is entirely different in the two recensions. The transp. begin at 1. 106. 12 and end at 1. 114. 14 (both inclusive). The Table of Contents (*viṣayānukramaṇī*) of the Kumbh. ed,

अथ पारशवीं कन्यां देवकस्य महीपतेः ।
रूपयौवनसंपन्नां स शुश्रावापगासुतः ॥ १२
ततस्तु वरयित्वा तामानाय्य पुरुषर्षभः ।
विवाहं कारयामास विदुरस्य महामतेः ॥ १३
तस्यां चोत्पादयामास विदुरः कुरुनन्दनः ।
पुत्रान्विनयसंपन्नानात्मनः सदृशान्गुणैः ॥ १४ C. 1. 4482 B. 1. 114. 14 K. 1. 126. 3

इति श्रीमहाभारते आदिपर्वणि षडधिकशततमोऽध्यायः ॥ १०६ ॥

---

(which follows the Southern arrangement) gives the sequence of S, while the concordance accompanying it allows the reader to follow the sequence of the various units in N. The transpositions appear to be extremely arbitrary and complicated: in reality they follow a definite plan, which is of the most simple character. The whole passage as given in the constituted text divides itself naturally into two sections (adhy. 106–108 and 109–114), dealing respectively with the births of the sons of Dhṛtarāṣṭra and Pāṇḍu. N narrates first the birth of all the sons of Dhṛtarāṣṭra, the elder brother, and then that of all the sons of Pāṇḍu, the younger brother: S narrates the incidents as a correlated sequence, beginning with the birth of Yudhiṣṭhira, following the chronological order of the births of the hundred and five sons of Pāṇḍu and Dhṛtarāṣṭra together. The turning point in the rearrangement in S is adhy. 109 (Pāṇḍu's curse). After that point there is, as may be seen from the following table, a lateral shift in S, which involves merely a dovetailing of the various units of the two sections mentioned above (so as to synchronize the incidents), leaving the different units in each section (with but one exception) in the same relative sequence. The constituted text follows N. The critical notes give invariably the combined collations of the two recensions, irrespective of the place of the stanza in the scheme of S; the additions of S are likewise noted under that particular stanza of N after which the addition has been found. Here is the sequence of S:

1. 106. 11
109. 5–end
*Colophon.*
110
111. 1–11 (+1177*)
111. 18–21
106. 12–end
*Colophon.*
107. 1–8 (+1135*)
111. 12–17 (+1181*)
111. 22–end
112
*Colophon.*
113. 1–37$^{ab}$ (+1197*)
*Colophon.*
113. 38–end
114. 1–7
107. 9–24
114. 8–14
107. 25–end
*Colophon.*
App. I, No. 63 (*Duḥś'alotpatti*)
*Colophon.*
108
*Colophon.*
114. 15 ff.

(*N. B.*—S om. 1. 109. 1–4 and 1. 113. 37$^{cd}$.)

12 For sequence see above. Before 12, $T_1$ $G_{2-4}$ ins. वैशं°. — $^a$) $G_5$ ततः (for अथ). $K_{0.3.4}$ Ñ $B_5$ $Dn_{2.n3}$ $D_5$ पारसवीं; $K_2$ °सवां; $T_2$ (*sup. lin.*) $G_6$ °वर्शीं; Cd as in text. — $^b$) T $G_{2.4}$ °स्य महात्मनः. — After 12$^{ab}$, $D_1$ reads 14$^{ab}$. — $^d$) $B_5$ तां; $D_5$ सं-; $G_5$ वि- (for स).

13 $G_1$ om. 13. — $^b$) $Ñ_2$ $B_{3.5}$m D (except $D_{2.4.5}$) आनीय. $K_{0.2.4}$ $Ñ_{1.2}$ Da Dn $D_{1.2}$ $T_2$ भरतर्षभः ($K_{0.2}$ $T_2$ °भ); $B_6$ $D_5$ $G_2$ $M_6$ °र्षभ. — $^d$) $K_1$ $B_1$ महीपतेः; $K_2$ $Da_1$ $D_1$ °मते; $B_5$ T $G_{2.4}$ M (except $M_5$) °त्मनः.

14 $M_7$ om. 14$^{ab}$. For $D_1$ cf. v. l. 12. — $^a$) Ko om. च. — $^b$) $K_{2.4}$ Ñ Dn °नंदन.

Colophon om. in $G_3$. $G_1$ missing. — *Major parvan:* $T_2$ $G_{2.4-6}$ M संभव° (for आदि°). — *Sub-parvan:* $Ś_1$ $K_{1-4}$ Ñ B Da $Dn_{1.n2}$ $D_{1-4}$ $T_1$ संभव. — *Adhy. name:* Ko विदुरवैवाहिकः; $Ñ_{1.2}$ विदुरपरिणयः;

# १०७

C. 1. 4483 B. 1. 115. 1 K. 1. 126. 4 वैशंपायन उवाच ।

ततः पुत्रशतं जज्ञे गान्धार्यां जनमेजय ।
धृतराष्ट्रस्य वैश्यायामेकश्चापि शतात्परः ॥ १
पाण्डोः कुन्त्यां च माद्र्यां च पञ्च पुत्रा महारथाः ।
देवेभ्यः समपद्यन्त संतानाय कुलस्य वै ॥ २

जनमेजय उवाच ।

कथं पुत्रशतं जज्ञे गान्धार्यां द्विजसत्तम ।
कियता चैव कालेन तेषामायुश्च किं परम् ॥ ३
कथं चैकः स वैश्यायां धृतराष्ट्रसुतोऽभवत् ।
कथं च सदृशीं भार्यां गान्धारीं धर्मचारिणीम् ।
आनुकूल्ये वर्तमानां धृतराष्ट्रोऽत्यवर्तत ॥ ४
कथं च शप्तस्य सतः पाण्डोस्तेन महात्मना ।
समुत्पन्ना दैवतेभ्यः पञ्च पुत्रा महारथाः ॥ ५
एतद्विद्वन्यथावृत्तं विस्तरेण तपोधन ।
कथयस्व न मे तृप्तिः कथ्यमानेषु बन्धुषु ॥ ६

वैशंपायन उवाच ।

क्षुच्छ्रमाभिपरिग्लानं द्वैपायनमुपस्थितम् ।
तोषयामास गान्धारी व्यासस्तस्यै वरं ददौ ॥ ७
सा वव्रे सदृशं भर्तुः पुत्राणां शतमात्मनः ।
ततः कालेन सा गर्भं धृतराष्ट्रादथाग्रहीत् ॥ ८

---

M3.5 पांडुतपश्चरणं. — *Adhy. no.* (figures, words or both): Ko 109; B1 D4 112; Da1 110; Dn 113; T1 108; T2 58; G2.4–6 M 59 (M3 60). — *S'loka no.:* Dn 14; M3 73.

## 107

1 Ś1 K1 D2 S om. उवाच. — $^{d}$) T1 एकः पुत्र-; T2 G M3.5 °श्चैव. — After 1, G5.6 read $4^{cdef}$, repeating it in its proper place (cf. v. l. 2).

2 $^{b}$) $=5^{d}$. Ñ Dn D1 पुत्राः पंच (by transp.). B1.3 महाबलाः. — After $2^{ab}$, G5.6 read $5^{cd}$–6, $6^{cd}$ being repeated in its proper place (cf. v. l. 1). — In G1, $2^{c}$–$3^{b}$ is lost on a torn part of the fol. (75). — G5.6 om. $2^{c}$–$3^{d}$. — $^{c}$) T G1.3.4 M सम° देवेभ्यः (by transp.). — $^{d}$) K1 ते; B5 D2 च (for वै).

3 G5.6 om. 3 (cf. v. l. 2). — In G1, $3^{ab}$ is lost on a torn part of the fol. (75). — Ś1 K1 S om. उवाच. — $^{b}$) K1 B (except B1) Da D2.4.5 G2 M3 गांधार्यां. — Ko (hapl.) om. from द्विज° up to गांधारीं (in $4^{d}$). — $^{c}$) T2 G1.3.4 M चापि (for चैव).

4 Ko om. up to गांधारीं (cf. v. l. 3). T1 G1–4 M read 4 after 6. — $^{a}$) Ñ3 एकस्य; D5 स चैको (by transp.). K2 S चैव (G1.5.6 चापि) (for चैकः). K4 T G1.2.6 वेश्या°. — Ñ3 (? hapl.) om. $4^{bc}$. — $^{b}$) D5 °राष्ट्रात्सुतो. S एकश्चा(G3 °कं चा)पि शतात्परः (G3 °रं). — G5.6 read $4^{cdef}$ after 1 and repeat it here. — $^{c}$) Ś1 K1.2.4 स; G6 -चित् (for च). — $^{e}$) S वर्तमानां प्रियेष्वेव. — $^{f}$) Ś1 K1.4 Ñ B3.5 Dn1.n2 D1.2.4 T2 G2.4 M3 °ष्ट्रोभ्य°; K2 D5 °ष्ट्रो न्य°; T1 °ष्ट्रोप्य°; G5.6 °ष्ट्रोन्व°.

5 $^{a}$) G1 शप्तस्य च (by transp.). B3 T1 G1.2.4 M6–8 ततः (for सतः). — $^{b}$) Ś1 K Ñ3 D2.4.5 °स्तस्य महात्मनः (Ko °स्तेन तपस्विना). — $^{cd}$) G5.6 read $5^{cd}$–6 after $2^{ab}$. Ś1 पंच पुत्रा दैवतेभ्यो (by transp.). K3 Ñ B D (except D5) पुत्राः पंच (by transp.). — $5^{d}=2^{b}$.

6 G5.6 read 6 (with $5^{cd}$) after $2^{ab}$ (repeating $6^{cd}$ here). — $^{a}$) S (G1 missing) एतत्सर्वं. Ś1 K1.2.4 Ñ1 D (except D2.4.5) यथान्यायं. — $^{c}$) S (except G5.6; G1 missing) कथय त्वं. Ko न तृप्यामि; D4 न मे तुष्टिः. — $^{d}$) B3.5 वक्षुषु (sic). — After 6, T1 G1–4 M read 4.

7 Ś1 K1 D5 S om. उवाच. — $^{a}$) K4 Ñ2 B3 Da1 °म्लानं; S (G1 missing) तृषितं बुभुक्षितं श्रां(G2–6 शां)तं (hypermetric!). — $^{d}$) S (G1 missing) स तु तस्यै.

8 $^{a}$) S सा वव्रे च (T2 G4 M3 by transp. च वव्रे) तदा. — $^{d}$) Ś1 K1–4 तदा(K2.4 °था)ग्रहीत्; Ko Ñ1 D5 अगृह्णत. S (except M5) अगृह्णाज्ज्ञानचक्षुषः. — After 8, S ins.:

1135* गान्धार्यामाहिते गर्भे पाण्डुरम्बालिकासुतः ।
अगच्छत्परमं दुःखमपत्यार्थमरिंदम ।
गर्भिण्यामथ गान्धार्यां पाण्डुः परमदुःखितः ।
मृगाभिशापादात्मानं शोचन्नुपरतक्रियः ।
स गत्वा तपसा सिद्धिं विश्वामित्रो यथा भुवि । [5]
देहन्यासे कृतमना  द वचनमब्रवीत् ।

संवत्सरद्वयं तं तु गान्धारी गर्भमाहितम् ।
अप्रजा धारयामास ततस्तां दुःखमाविशत् ॥ ९
श्रुत्वा कुन्तीसुतं जातं बालार्कसमतेजसम् ।
उदरस्यात्मनः स्थैर्यमुपलभ्यान्वचिन्तयत् ॥ १०
अज्ञातं धृतराष्ट्रस्य यत्नेन महता ततः ।
सोदरं पातयामास गान्धारी दुःखमूर्च्छिता ॥ ११
ततो जज्ञे मांसपेशी लोहाष्ठीलेव संहता ।
द्विवर्षसंभृतां कुक्षौ तामुत्स्रष्टुं प्रचक्रमे ॥ १२
अथ द्वैपायनो ज्ञात्वा त्वरितः समुपागमत् ।
तां स मांसमयीं पेशीं ददर्श जपतां वरः ॥ १३
ततोऽब्रवीत्सौबलेयीं किमिदं ते चिकीर्षितम् ।
सा चात्मनो मतं सत्यं शशंस परमर्षये ॥ १४
ज्येष्ठं कुन्तीसुतं जातं श्रुत्वा रविसमप्रभम् ।
दुःखेन परमेणेदमुदरं पातितं मया ॥ १५
शतं च किल पुत्राणां वितीर्णं मे त्वया पुरा ।
इयं च मे मांसपेशी जाता पुत्रशताय वै ॥ १६

व्यास उवाच ।

एवमेतत्सौबलेयि नैतज्जात्वन्यथा भवेत् ।
वितथं नोक्तपूर्वं मे स्वैरेष्वपि कुतोऽन्यथा ॥ १७
घृतपूर्णं कुण्डशतं क्षिप्रमेव विधीयताम् ।
शीताभिरद्भिरष्ठीलामिमां च परिषिञ्चत ॥ १८

वैशंपायन उवाच ।

सा सिच्यमाना *अष्ठीला *अभवच्छतधा तदा ।
अङ्गुष्ठपर्वमात्राणां गर्भाणां पृथगेव तु ॥ १९ C. 1. 4501 B. 1. 115. 20 K. 1. 129. 36

---

which is followed by 1. 111. 12–17 (cf. v. l. 1. 106. 11).

9 S reads 9–24 after 1. 114. 7 (cf. v. l. 1. 106. 11). — a) Da °द्वयं भर्तुः; S °रे द्वितीये तु (M °त्र). — b) Ś1 °मावहत्; B5 °मास्थितं. S गांधार्यां उदरं महत्. — D5 om. $9^{cd}$. — c) S न च (T1 हि) प्र(T2 G4.6 प्रा)जायत तदा (G3 °था).

10 a) G4 °सुतं राजन्. — c) G3 °स्याश्मना; M6–8 °स्यात्मना. G2.4.5 M6–8 धैर्यं. — d) D5 °लभ्य त्वचिंत°; S °लभ्य च सौबली (T1 सुव्रत; T2 G2.4.5 सौबला; M3 *inf. lin.* सुव्रता).

11 a) S कौरव्य(M6–8 °व)स्यापरिज्ञातं (M3.5 °ता). — b) B5 तदा; S स्वयं (for ततः). — c) K (except K4) Dn3 D4 स्वोदरं; S उ°. Ś1 K Da1 D4.5 ताडयामास; Dn D1 घात°; M6–8 पाट° (cf. v. l. 15). — d) K0 दुःखकर्शिता; S शोकमूर्च्छि(G2 °कर्शि)ता.

12 b) B6 लोहात्मानेव (m as in text). S साष्ठीला जनमेजय. — c) D5 द्वे वर्षे (for द्विवर्ष°). Ś1 K1 °हृता; K3 Ñ1.2 Da2 Dn2 T1 G3 M3.5 °भृता; Ñ3 °हिता; B1 °हितां. — d) D5 समुत्स्रष्टुं.

13 a) S ततो द्वै°. Ś1 राज्ञः (*sup. lin.* as in text); S राजन् (for ज्ञात्वा). — b) B5 त्वरितं. K2.4 Ñ1.2 B5 °पागतः. S आजगाम यदृच्छया. — c) K1 स तां (by transp.); K2.4 B5 S तां च; D5 स तु. D2 तामग्रतो मांसपेशीं. — d) S वदतां व°.

14 a) D5 तत्राब्रवीत्. — c) G5 चात्मना कृतं. S सर्वं (for सत्यं). — d) K2.4 सुमहर्षये.

15 Before 15, B D (except D2.4.5) ins. गान्धार्युवाच. — b) K1 ज्ञात्वा (for श्रु°). — c) Ñ3 एवं (for इदं). — d) K0.1 ताडितं; K3 M6–8 पाटि°; Dn D1.5 घाति° (cf. v. l. 11). Ś1 ताडितमुदरं मया.

16 b) Ñ1.2 B5m.6m Da वरो दत्तः (for वितीर्णं मे). K2.4 D1 पुरा त्वया (by transp.). S दत्तवानसि मे प्रभो. — c) Ś1 K1 सा (for मे). Da इयं च मांसपेशी मे; S इयं मांसमयी पेशी. — d) S मे (for वै).

17 Ś1 K1 S om. उवाच. — a) S एतावदेतद्गांधारि. — d) Ś1 K2.3 Ñ कुतोवरे; K1 °प(*sup. lin.* °व)रे; K4 °परे; S कदाचन.

18 a) K (except K1) Ñ1 B (B1m.3m as in text) Dn1m D2 G3 (*sup. lin.* as in text) M3 (*sup. lin.*) कुंभशतं. — b) S क्षिप्रमानीयतामिति (T2 आनाय्य तु महानृषिः). — N (except Ñ; for K3 see below) ins. after $18^{ab}$ (Ś1, after 18):

1136* स्वनुगुप्तेषु देशेषु रक्षा चैव विधीयताम् ।

[ =(var.) $21^{cd}$. B1 (m as in text) Da अनुगु°; Dn D1 सुगुप्तेषु च; D5 स्वेन गु°. K3 विधिना पूर्वदृष्टेन वेदोक्तेन विशेषतः. ]

— T2 om. $18^{c}$–$20^{b}$. — d) K1 परिषिंच वै; K3 M3 °षिच्यतां; K4 Ñ1.2 Dn D1 °षिंचय; B (except B5) Da D2.4 °षेचय; M6–8 °षंचतां (sic). D5 इमां परिनिषिंचतां. — After 18, Ś1 ins. 1136*.

19 T2 om. 19 (cf. v. l. 18). K3 om. $19^{ab}$. Ś1 K1

G. 1. 4502 B. 1. 115. 21 K. 1. 129.

एकाधिकशतं पूर्णं यथायोगं विशां पते ।
मांसपेश्यास्तदा राजन्क्रमशः कालपर्ययात् ॥ २०
ततस्तांस्तेषु कुण्डेषु गर्भानवदधे तदा ।
स्वनुगुप्तेषु देशेषु रक्षां च व्यदधात्ततः ॥ २१
शशास चैव भगवान्कालेनैतावता पुनः ।
विघट्टनीयान्येतानि कुण्डानीति स सौबलीम् ॥२२

इत्युक्त्वा भगवान्व्यासस्तथा प्रतिविधाय च ।
जगाम तपसे धीमान्हिमवन्तं शिलोच्चयम् ॥ २३
जज्ञे क्रमेण चैतेन तेषां दुर्योधनो नृपः ।
जन्मतस्तु प्रमाणेन ज्येष्ठो राजा युधिष्ठिरः ॥ २४
जातमात्रे सुते तस्मिन्धृतराष्ट्रोऽब्रवीदिदम् ।
समानीय बहून्विप्रान्भीष्मं विदुरमेव च ॥ २५

D2.5 S om. उवाच. — a) S (except G1.5; T2 om.) संसिच्य°. N (K3 om.) त्वष्ठी(Ko °ष्ठै)ला; S (T2 om.) ह्य(G3 व्य)ष्ठीला. — b) N (K3 om.) बभूव शतधा (B Da D2.4 बहुधा); S (T2 om.) ह्यभवच्छतधा (M3 by transp. शतधा ह्यभवत्). — c) G3-5 °मानानां. — d) T1 M3.6-8 °णां तु (T1 च) पृथक्पृथक्; G M5 °णां पुनरेव तु.

20 T2 om. 20ab (of v. l. 18). — a) Ś1 K1.2.4 B6 Da M °धिकं (M6-8 °का) शतं; Ko ततोभवच्छतं. K3 °धिकं पूर्णशतं. — b) Ś1 K1.2.4 °योगं विशेषतः. — After 20ab, D4 S (except T2) ins.:

1137* ततः कुण्डशतं तत्र आनाय्य तु महानृषिः ।
[D4 कुंभशतं. G3 आनीय.]

— c) B5 °पेश्यां. Ś1 K (except K3) B5 D5 ततो; Da Dn1 तथा. — After 20, G2 ins. 1138* (cf. v. l. 21).

21 G2 om. 21; M5 om. 21–22. — a) Ko भांडेषु; K2.4 Ñ2 B5.6 D2.5 T2 G3 (*sup. lin.*) कुंभे°; Da देशे°. — b) D2 सदा; D5 पुनः (for तदा). S (G2 M5 om.) गर्भान्सर्वान्समादधात् (G3 °दत्; G5 M6-8 °धत्). — c) K2 सुप्रगु°; M (M5 om.) सम्यग्गु°. — d) Ñ Dn वै (for च). Ś1 व्यदधत्त्रपः; Ko-2 °धात्प्रभुः; K3 °धाद्विभुः; K4 Ñ3 विदधा(Ñ3 °ध)त्पुनः. S (G2 M5 om.) रक्षां चै(M6-8 त्वे)षां (G4 °नां; G5 °वा) व्यधाप(T2 G4.5 °र)यत्. — S (except M5) ins. after 21 (G2, after 20):

1138* शशास चैव कृष्णो वै गर्भाणां रक्षणं तदा ।
[Cf. 22ab. G1.2 M3 शशंस. G3 सर्वं; G4 चैषु (for चैव). G1.2 M3 तथा.]

22 M5 om. 22 (cf. v. l. 21). — a) Ñ3 D (except Da1 D2.4) शशंस; S (M5 om.) उवाच. T1 एनां स; T2 G M3 चैनां. — b) G4 कालेनैताः पुनः पुनः; G6 °नैव तथा पुनः. — cd) Ś1 Ko.1 Ñ1.3 विघाट°; Da Dn D1 उद्घाट°; D5 उक्षाप° (for विघट्ट°). Ñ2 D2.5 कुंभानि. B1.6 D2 स; B3 Dn D1.4 च (for स). S (M5 om.) घटमानेषु कुंडेषु जाताञ्जानीहि (G3 शतं जातानि) शोभने. — After 22, S (except M5) ins.:

1139* अष्टोत्तरा कुमारास्ते कुण्डेभ्यस्तु समुत्थिताः ।
[G1 °स्तु शतोत्तराः.]

23 S transp. 23 and 24. — b) Ko.2.4 रक्षां (for तथा). Ñ2 B3 Dn D1 °निधाय. D5 तत्रैवांतरधीयत. — For 23, S subst.:

1140* एवं संदिश्य कौरव्य कृष्णद्वैपायनस्तदा ।
जगाम पर्वतायैव तपसे संशितव्रतः ।

24 S transp. 23 and 24. — ab) B5 °धनो वरः. S तेनैवैषां क्रमेणासीज् (G1 M6-8 क्रमेणापि) ज्येष्ठाज्ज्येष्ठता तदा. — c) Ś1 धर्मतस्तु; D2 जन्मतस्तत्. S च (for तु). — d) Ś1 K D1 तेषां ज्येष्ठो (K3 by transp. ज्येष्ठस्तेषां) युधि°; S ज्येष्ठः कुंतीसुतोभवत् (G2 °वेत्). — After 24, G3 ins. a passage of 48 lines given in App. I (No. 62); while N ins.:

1141* तदाख्यातं तु भीष्माय विदुराय च धीमते ।

N (except Ś1 K1; K2 om. lines 3–6) cont.:

1142* यस्मिन्नहनि दुर्धर्षो जज्ञे दुर्योधनस्तदा ।
तस्मिन्नेव महाबाहुर्जज्ञे भीमोऽपि वीर्यवान् ।
स जातमात्र एवाथ धृतराष्ट्रसुतो नृप ।
रासभारावसदृशं रुराव च ननाद च ।
तं खराः प्रत्यभाषन्त गृध्रगोमायुवायसाः ।
वाताश्च प्रववुश्चापि दिग्दाहश्चाभवत्तदा ।

[(L. 1) K3 Ñ1.2 B (except B5) D2 °धनो नृपः. — (L. 2) Ko.2.4 D5 °न्नेव महाराज भीमसेनो व्यजायत; Ñ B5 भीमसेनोपि तत्रैव समजायत पार्थिव. — (L. 4) Ko.3 D5 रुरोद (for रुरा°). — (L. 6) B (except B3) D2.4 वाता विप्रव°.]

25 S reads 25–37 after 1. 114. 14 (cf. v. l. 1. 106. 11). — For 25ab, S subst.:

1143* दुर्योधने जातमात्रे दिक्षु सर्वासु भारत ।
क्रव्यादाः प्राणदन्घोराः शिवाश्चाशिवनिस्वनाः ।
ववर्ष रुधिरं देवो भयमावेदयन्महत् ।
एतस्मिन्नन्तरे राजा धृतराष्ट्रोऽम्बिकासुतः ।

[(L. 1) Posterior half = 28b. — (L. 2) = 28cd.]

— a) K4 Ñ B D ततस्तु (D5 °श्च) भीतवद्राजा. — b) B5 °ब्रवीद्वचः. — G1 om. 25e–27d. — c) S (except M3.5;

युधिष्ठिरो राजपुत्रो ज्येष्ठो नः कुलवर्धनः ।
प्राप्तः स्वगुणतो राज्यं न तस्मिन्वाच्यमस्ति नः ॥२६
अयं त्वनन्तरस्तस्मादपि राजा भविष्यति ।
एतद्धि ब्रूत मे सत्यं यदत्र भविता ध्रुवम् ॥ २७
वाक्यस्यैतस्य निधने दिक्षु सर्वासु भारत ।
क्रव्यादाः प्राणदन्घोराः शिवाश्चाशिवशंसिनः ॥२८
लक्षयित्वा निमित्तानि तानि घोराणि सर्वशः ।
तेऽब्रुवन्ब्राह्मणा राजन्विदुरश्च महामतिः ॥ २९
व्यक्तं कुलान्तकरणो भवितैष सुतस्तव ।
तस्य शान्तिः परित्यागे पुष्ट्या त्वपनयो महान् ॥३०
शतमेकोनमप्यस्तु पुत्राणां ते महीपते ।
एकेन कुरु वै क्षेमं लोकस्य च कुलस्य च ॥ ३१
त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ ३२
स तथा विदुरेणोक्तस्तैश्च सर्वैर्द्विजोत्तमैः ।
न चकार तथा राजा पुत्रस्नेहसमन्वितः ॥ ३३ C. 1. 4518 B. 1. 115. 40 K. 1. 129 84

---

G1 om.) समाहूय. — d) S (G1 om.) विदुरं चेदमब्रवीत्. — After 25, N ins.:

1144* अन्यांश्च सुहृदो राजन्कुरून्सर्वांस्तथैव च ।

[ Ś1 K1.4 राज्ञः (for राजन्). ]

26 G1 om. 26 (cf. v. l. 25). — Before 26, Ś1 K0.1.3 Ñ2 B3.5 D2.5 S (except G1) ins. धृतराष्ट्रः; Ś1 (!) K3 Ñ2 B3.5 D2.5 cont. उवाच. — ab) B5 कुलनंदनः. S (G1 om.) श्रुतं मया यथा जातो ज्येष्ठः पांडोः सुतः किल. — cd) T1 om. 26cd; D2 reads it in marg. K3 D2.4 स गुण°. S (T1 G1 om.) स तु (M च) दुर्योधनात् (G6 °धन-) ज्येष्ठस् (T2 G4–6 श्रेष्ठस्) तस्मिन्राज्यं न संशयः.

27 G1 om. 27 (cf. v. l. 25). — a) Ś1 K1.2.4 अनंतरं त्वयं; K0.3 Dn3 D1 G6 M3.5 अयं त्वनंतरं; T2 G2–5 अयं चानंतरं (G3–5 °रः). D5 अयं त्वंतरजातस्य. — b) D5 युवराजो भवि°; S (G1 om.) राजा भवितुमर्हति. — c) T G3.4 M3.5 एतं; G2 M6–8 एवं. K0.3 Ñ1.2 B1.3.5 Dn D5 T G2–4 वि-; Ñ3 वै; B6 D2.4 प्र- (for हि). K3 ब्रूहि. Ñ2 B (except B5) D (except D5) तथ्यं; S (G1 om.) प्रश्नं. K1 एतद्धि मे भूतसत्यं. — d) S (G1 om.) यद्वास्मिन्दृश्यते फलं. — After 27, S (except G1) ins.:

1145* अस्मिञ्जाते निमित्तानि शंसन्ति ह्यशिवं महत् ।
अतो ब्रवीमि विदुर द्रुतं मां भयमाविशत् ।

[ (L. 1) G1 M3.5 प्रशंसंत्यशिवं. — (L. 2) M3.5 ब्रूत मां. ]

28 a) T2 जातस्यैतस्य. G1 दुर्योधने जातमात्रे. — c) B5 व्यानदन्; Dn D2.5 T1 G1.2 M5 प्रण°. — d) Ś1 K Ñ3 D5 °शंसिनीः.

29 Before 29, T G (except G5) ins. वैशं°. — b) K0 घोररूपाणि स°; K1 तादृशानि तु स°; D1 घोराणि मनुजाधिप (cf. 1146* below); S तानि सर्वाणि भारत. — c) D1 सर्वे (for राजन्). — d) K0 महायशाः. — After 29, N ins.:

1146* यथेमानि निमित्तानि घोराणि मनुजाधिप ।
उत्थितानि सुते जाते ज्येष्ठे ते पुरुषर्षभ ।

[ (L. 1) K0 यथैतानि; K2.4 यच्चे°; K3 B5 अथे°; D5 तथै°. K1 °णि प्रभवंति हि; K2.4 घोररूपाणि भूमिप; D1 तानि घोराणि सर्वशः (=29b). — (L. 2) Ś1 K0.3 Ñ2.3 B5 D5 कुरुनंदन; K1.2.4 कुलनंदने (K1 °न); B1 भरतर्षभ. ] — K0 D5 ins. after 1146*: D4, after 30:

1147* एष दुर्योधनो राजा श्यामः पिङ्गललोचनः ।
न केवलं कुलस्यान्तं क्षत्रियान्तं करिष्यति ।

[ Before line 1, D4 ins. विदुर उ°. — (L. 1) D4 एवं दुर्यो°. D4 मधुपिंगल°. ]

30 a) S अयं कुलांतकृज्जातो. — b) K2.4 Da भविष्यति. S यस्मात्स (T2 G5.6 °च्च; M यदयं) कुलपांसनः. — c) S तस्य त्यागेन शांतिः स्यात्. — d) K4 B1.3 (both m as in text) Da2 गुह्या; Ñ2 Dn D1.4 गुप्तौ; Da1 गुप्ते. Ś1 K1 तस्यानयो; K0 चाप°; Ñ2 Dn D1.4 अप°. K0 भवेत् (for महान्). S पुष्टिस्त्वपनये भवेत्. — After 30, D4 ins. 1147*.

31 a) B3 °कोनं पश्यन्ति (m as in text). — b) Ś1 K1.3 Ñ3 B5 D5 विशां पते; K0 नराधिप; K2.4 जनाधिप. — After 31ab, N ins.:

1148* त्यजैनमेकं शान्तिं चेत्कुलस्येच्छसि भारत ।

[ Ś1 K1 शांतिश्चेत्. K1 विधेया भरतर्षभ (for the posterior half). — c) Ś1 एकेनैव कुरु. K1 B1.6 D4 वै कुरु (by transp.). S नः (for वै). — d) Ñ1.2 B (except B5) D (except D5) कुलस्य जगतस्तथा.

32 a) K1.2.4 Ñ3 T1 G2–5 M5 त्यजेत्कुलार्थे पुरुषं. — c) Ñ2 ग्रामान्. — d) Ś1 K1 स्वात्मार्थे.

33 Before 33, Ś1 K1 ins. वैशं°; B1 वैशं° उवाच. — a) K0.1 तथा च (K1 स). — b) Ś1 Ñ1 तथा; K1 तैस्तैः; B5 तस्य. Ñ1 सर्वं. K0 तथा द्विजैः; K2–4 द्विजातिभिः. S तैश्च विप्रैर् जना(G3 नरा)धिप (M6–8 महात्मभिः). — c) K2.4 S तदा (M5 °तो). B5 D5 राजन्. — d) Ś1 K1 °बलान्वितः; K2.4 °बलात्कृतः; D5

C. 1. 4519 B. 1. 115. 40 K. 1. 129. 84 ततः पुत्रशतं सर्वं धृतराष्ट्रस्य पार्थिव ।
मासमात्रेण संजज्ञे कन्या चैका शताधिका ॥ ३४
गान्धार्यां क्लिश्यमानायामुदरेण विवर्धता ।
धृतराष्ट्रं महाबाहुं वैश्या पर्यचरत्किल ॥ ३५
तस्मिन्संवत्सरे राजन्धृतराष्ट्रान्महायशाः ।
जज्ञे धीमांस्ततस्तस्यां युयुत्सुः करणो नृप ॥ ३६
एवं पुत्रशतं जज्ञे धृतराष्ट्रस्य धीमतः ।
महारथानां वीराणां कन्या चैकाथ दुःशला ॥ ३७

इति श्रीमहाभारते आदिपर्वणि सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

## १०८

जनमेजय उवाच ।
ज्येष्ठानुज्येष्ठतां तेषां नामधेयानि चाभिभो ।
धृतराष्ट्रस्य पुत्राणामानुपूर्व्येण कीर्तय ॥ १

वैशंपायन उवाच ।
दुर्योधनो युयुत्सुश्च राजन्दुःशासनस्तथा ।
दुःसहो दुःशलश्चैव जलसंधः समः सहः ॥ २

°बलार्दितः; T1 °वशं गतः.

34 $^{a}$) Ko राजन्; Ñ2 B5 D (except D4.5) पूर्णं (for सर्वं). — $^{b}$) K1 B5 S भारत; K3 वै तदा (for पार्थि°). — G1 om. 34$^{c}$–36$^{d}$. — $^{c}$) S (G1 om.) अह्नां (M5–8 °ह्ना) शतेन सं°. — $^{d}$) K3 Ñ D4 चैव. T1 G3.6 M शतात्परा; T2 G2.4.5 च दुःशला.

35 G1 om. 35 (cf. v. l. 34). — $^{b}$) S (G1 om.) वर्धं(G2 °र्तं)माने तथो(G5 °तो)दरे (G6 °ये). — $^{cd}$) Ñ Dn D1 महाराजं (for °बाहुं). D1.5 °चरत्तदा. S (G1 om.) वेश्या सा त्वंबिकापुत्रं कन्या परिचचार ह.

36 D1 G1 om. 36 (cf. v. l. 34). — $^{ab}$) Ś1 K1 B5 धृतराष्ट्रो महा°. S (G1 om.) तया समभव(M3 orig. समागम; *inf. lin.* समभव)द्राजा धृतराष्ट्रो यदृच्छया. — $^{cd}$) Ś1 K1–3 D5 सुतः (for ततः). Ś1 B5 D5 तस्य; K1 तस्याः. Ko जज्ञे तस्यां सुतो धीमान् (for $^{c}$). Ś1 K2 Ñ3 Da1 करणो नृपः; K1 कर्ण एव च. S (G1 om.) तस्यामजनयत्पुत्रं युयुत्सुं नाम भारत (G2.4 नामतः).

37 K1 om. 37. — $^{ab}$) S इत्थमेकशतं जज्ञे पुत्राणां भरतर्षभ. — $^{c}$) G3 शूराणां. — $^{d}$) Ś1 Ko.2.4 D5 एका कन्या च (for कन्या चैका°). D2 T2 G1.2.4 च (for अथ). Ñ2.3 B Da Dn D1.4 शताधिका (for -थ दुःशला). — K4 Ñ B D ins. after 37 (B5, after 1150*):

1149* युयुत्सुश्च महातेजा वैश्यापुत्रः प्रतापवान् ।

B5 S, on the other hand, ins. after 37:

1150* धृतराष्ट्रस्य राजेन्द्र यथा ते कथितं मया ।

Colophon om. in K1. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 Ko.2–4 Ñ B Da Dn D2.4.5 संभव. — *Adhy. name:* K3 दुर्योधनोत्पत्तिः; Ñ1.2 गांधारीपुत्रोत्पत्तिः; Da धृतराष्ट्रसुतोत्पत्तिः; T2 G4 धर्मपुत्रभीमसेनदुर्योधनादिसंभवः; G1 पुत्रोत्पत्तिः; M6–8 धर्मपुत्रसंभवः. — *Adhy. no.* (figures, words or both): Ko 110; B1 Dn1 D4 113; Dn3 114; T1 111; T2 61; G M 62. — *S'loka no.:* Dn 41; M3 79.

☞ After adhy. 107, all MSS. except Ś1 Ko–3 (V1 missing) ins. an additional adhy. given in App. I (No. 63). The details of its colophon are as follows. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* K4 Ñ B Dn D1.2.4.5 T1 संभव. — *Adhy. name:* Da दुःशलोत्पत्तिः; M3 दुःशलासंभवः. — *Adhy. no.* (figures, words or both): B1 Dn D4 114 (Dn3 115); T1 112; T2 62; G M 63. — *S'loka no.:* Dn1 18; Dn2.n3 17. — *Aggregate s'loka no.:* Dn2 4542.

## 108

☞ This adhy. forms (with some minor variations) passage No. 41 of App. I, a passage interpolated in some N MSS. after 1. 61. 83. The present adhy. is reconstructed by collation with the passage given in the App., which latter appears to have preserved more faithfully the older N version. Cf. also the list in the Jav. version, which is partly corrupt but agrees with N more than with S.

1 K1 om. 1$^{a}$–3$^{c}$. S om. उवाच; Ś1 has it here! — $^{a}$) Ko चैषां; K2–4 एषां; S (except M3) चैव. Ñ1

विन्दानुविन्दौ दुर्धर्षः सुबाहुर्दुष्प्रधर्षणः ।
दुर्मर्षणो दुर्मुखश्च दुष्कर्णः कर्ण एव च ॥ ३
विविंशतिर्विकर्णश्च जलसंधः सुलोचनः ।
चित्रोपचित्रौ चित्राक्षश्चारुचित्रः शरासनः ॥ ४
दुर्मदो दुष्प्रगाहश्च विवित्सुर्विकटः समः ।
ऊर्णनाभः सुनाभश्च तथा नन्दोपनन्दकौ ॥ ५
सेनापतिः सुषेणश्च कुण्डोदरमहोदरौ ।
चित्रबाणश्चित्रवर्मा सुवर्मा दुर्विमोचनः ॥ ६
अयोबाहुर्महाबाहुश्चित्राङ्गश्चित्रकुण्डलः ।
भीमवेगो भीमबलो बलाकी बलवर्धनः ॥ ७
उग्रायुधो भीमकर्मा कनकायुर्दृढायुधः ।
दृढवर्मा दृढक्षत्रः सोमकीर्तिरनूदरः ॥ ८
दृढसंधो जरासंधः सत्यसंधः सदःसुवाक् ।
उग्रश्रवा अश्वसेनः सेनानीर्दुष्पराजयः ॥ ९
अपराजितः पण्डितको विशालाक्षो दुरावरः ।
दृढहस्तः सुहस्तश्च वातवेगसुवर्चसौ ॥ १०
आदित्यकेतुर्बह्वाशी नागदन्तोग्रयायिनौ ।
कवची निषङ्गी पाशी च दण्डधारो धनुर्ग्रहः ॥ ११ C. 1. 4550 B. 1. 117. 11 K. 1. 131. 11

°ज्येष्ठमेतेषां. — $^{b}$) T1 चाविभो; G2 M6–8 च प्रभो; G3 चापि भो. N नामानि च पृथक्पृथक्. — $^{d}$) K2.4 Ñ3 B3.6 D5 M5 °पूर्वेण की°; Dn D1.4 °पूर्व्या प्र(D4 °त्प्र)की°; G4 नामधेयानि कीर्तय.

2 K1 om. 2 (cf. v. l. 1). Ś1 D5 S om. उवाच. — $^{c}$) S दुर्धर्षो दुर्मुख°. — $^{d}$) T2 G1.2.4.5 जलसंधिः; G3 °सिद्धः. Ś1 सयः सहः; K3 Ñ3 S सहः (T1 °लः) समः (by transp.).

3 K1 om. $3^{abc}$ (cf. v. l. 1). — $^{a}$) K2 भीमश्च; D4 दुर्धर्षौ; T1 दुष्टाहः; T2 G M5 दुष्पा(G1 M5 °ष्प)हः; M3 (hypermetric) दुष्प्रषापः (*inf. lin.* °प्रांतः); M6–8 (hypermetric) दुप्रसह (sic). — $^{b}$) Ś1 M7 दुर्बाहुः सु(M7 दुः)प्रध°. — $^{c}$) Ñ3 दुर्मनश्च (for दुर्मु°). S दुर्मद(T2 G4.5 °र्षत-; G1–3 दुर्मुख-; M6.8 °र्दम)श्चित्रयोधी (T2 °शी; M6 °नी) च. — $^{d}$) K1 युयुत्सुः क°.

4 $^{b}$) Ñ1.2 B1.3.6 Da Dn शलः सत्वः; B5 शलः संधः; D1 शलः सत्यः; G1 जलसंधिः. — $^{c}$) S (except T1 M3.6–8) चित्रो विचित्रः. Ś1 K3 चित्राख्यः; B D2.4 च तथा; T2 G4.5 चित्राश्वः. — $^{d}$) K0 G2 °चित्र-; B3.5 चारुश्चित्रः; T2 G4.5 उरुचित्रः.

5 B1.3.6 D2.4 read $5^{ab}$ after 6. — $^{a}$) K1 B5 दुर्दमो; K3 °मुखो; Ñ1 °ष्प्रभो. Ś1 दुष्प्रकलहो; K1 °वाहश्च; Ñ1.2 B D2.4 °सा(Ñ1.2 °मा)द्रश्च; Da Dn D1 दुर्वि°. S दुर्मर्षणो दुष्प्रधर्षो (G3 दुर्मर्षो दुष्प्रधर्षो वै). — $^{b}$) T2 G2.4.5 विकृतः (for °कटः). Ñ B D (except D1.5) विकटान(Ñ3 °स)नः (for विकटः समः). S (except G2.4 M5) शमः. — K2 om. $5^{c}$–$6^{d}$. — $^{c}$) D5 सुदर्शनः सुना°.

6 N om. $6^{ab}$; K2 om. $6^{cd}$ also (cf. v. l. 5). — $^{b}$) = 1. 31. 15$^{f}$. — After $6^{ab}$, S ins.:

1151* चित्रध्वजश्चित्ररथश्चित्रबाहुरमित्रजित् ।

— $^{d}$) K4 M3(*inf. lin.*).5 दुर्विलोचनः; G2 °रोचनः. — After 6, B1.3.6 D2.4 read $5^{ab}$.

7 $^{ab}$) B6 D2.4 अयोबाहुश्चित्रबाहुः. K2.4 श्रुतवान्दीर्घलोचनः; Ñ3 °गश्चित्रविद्ध(marg. *sec. m.* °कुंड)लः. S चित्रसेनश्च विक्रांतः सुचित्रश्चित्रवर्मधृक्. — S om. $7^{c}$–$9^{d}$. — $^{c}$) K2.4 D5 भीमबाहुः (for °वेगो). B भीमरावो भीमगलो. — $^{d}$) Ś1 °की वंशवर्धनः; K2.4 D5 सुषेणः पंडितस्तथा; B1 सुजितो वामनस्तथा; B3.6 सुजितः कविससमः (B3 °वामनः); B5 वामनः सुजितो वरः.

8 S om. 8 (cf. v. l. 7). — $^{ab}$) K2.4 Dn D1.5 उग्रायुधः सुसोम(Dn D1.5 °षेण)श्च दंड(Dn कुंड)धारो (D5 °री) महोदरः (cf. $6^{ab}$). — After $8^{ab}$, K2.4 Dn D1.5 ins.:

1152* चित्रायुधो निषङ्गी च पाशी वृन्दारकस्तथा ।

(cf. $11^{c}$). — $^{cd}$) K2.4 om. $8^{cd}$. K1 B (except B1) Da D2.4 दृढकर्मा; K3 °धर्मा (for °वर्मा). K0 बृहत्कर्मा बृहत्क्षत्रः (for $^{c}$). Ś1 K1 B3 बहूदरः; K0 अनंतकः; K3 अनुत्तरः (for अनू°). D5 सुलोचनश्चित्रसेनः सर्वसंधः सठस्तथा.

9 S om. 9 (cf. v. l. 7). D5 om. $9^{ab}$. — $^{ab}$) Ñ1 दृढसत्वो (for °संधो). Ś1 K1 D1 सु(K1 स)दस्यवाक्; K0 सुदुग्र°; K3 सुदःसु°; Ñ1 सुसत्य°; Ñ3 सदःसुयान्; D4 सहः सुरः. K2.4 शत्रुंजयः शत्रुसहो जरासंधः सहस्तथा. — $^{c}$) N1.3 B D2 °केतुः; B5m Da Dn D1.5 उग्र°; D4 उग्रकेतुः (for अश्व°). K2.4 सुदर्शनश्चित्रसेनः. — $^{d}$) Ñ1 B5 दुष्प्रसाद(B5 °ध)कः; B1.3.6 Da D2.4 दुर्जयो जयः.

10 $^{a}$) Hypermetric! N कुंडशायी (for पण्डि°). — $^{b}$) Ś1 दुरावसुः; K0.3 Ñ B1.5.6 Da Dn D1.2 °धरः; K2.4 D5 जयस्तथा; B3 °सदः; D4 धराधरः; M3.5 च दुर्जयः. — After $10^{ab}$, D4 S ins.:

1153* अजितश्च जयन्तश्च जयत्सेनोऽथ दुर्जयः ।

C 1. 4551 B 1. 117. 12 K 1. 181. 12 उग्रो भीमरथो वीरो वीरबाहुरलोलुपः ।
अभयो रौद्रकर्मा च तथा दृढरथस्त्रयः ॥ १२
अनाधृष्यः कुण्डभेदी विरावी दीर्घलोचनः ।
दीर्घबाहुर्महाबाहुर्व्यूढोरुः कनकध्वजः ॥ १३
कुण्डाशी विरजाश्चैव दुःशला च शताधिका ।
एतदेकशतं राजन्कन्या चैका प्रकीर्तिता ॥ १४
नामधेयानुपूर्व्येण विद्धि जन्मक्रमं नृप ।
सर्वे त्वतिरथाः शूराः सर्वे युद्धविशारदाः ॥ १५
सर्वे वेदविदश्चैव राजशास्त्रेषु कोविदाः ।
सर्वे संसर्गविद्यासु विद्याभिजनशोभिनः ॥ १६
सर्वेषामनुरूपाश्च कृता दारा महीपते ।
धृतराष्ट्रेण समये समीक्ष्य विधिवत्तदा ॥ १७
दुःशलां समये राजा सिन्धुराजाय भारत ।
जयद्रथाय प्रददौ सौबलानुमते तदा ॥ १८

इति श्रीमहाभारते आदिपर्वणि अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

— d) B1 D2.4 वायु°.

11 b) N नागदत्तो(Ko.1.3 B1.5 Da D2.4 °दंतो-; D5 °दंडो)ग्रयाय्य(Ñ2 °गाम्य)पि; S (except G5) °दंतोग्रशा (T1 °दंष्ट्रोग्रशा-; G1 M °दंताग्रया)यिनौ. — c) Hypermetric! D4 om. च. Ś1 K1 च निकुंडश्च; Ko.4 D1 क्राथकुं(K4 °खं)डौ च; K2 कुंडखंडौ च; K3 मंडिकुंडौ च; Ñ1 राढः कुराढश्च; Ñ2 B3.6 Da निषंगी कुंडी; Ñ3 षंडकुंडश्च; Dn क्रं(Dn2 क्र)थनः कुंडो; B5 निषंगी कुंडी च; D2 खड्गकुंडौ च; D5 क्राथपांडौ च; T1 निषंगिणी चापि; G1.2 च निषंगी च (for निष° पाशी च). B1 निषंगी कवची कुंडी; G3 कृषवी निषंगी पापाशी (sic). — d) N कुंड(B1 °डा)धारो. N T2 G1.4 धनुर्धरः. G3 गदाधरधनुर्ग्रहौ.

12 a) N उग्रभीमरथौ (Ś1 K1 °थो). Ko.2.4 Ñ2 Dn D1 वीरौ; K3 Ñ1.3 B Da D2.4.5 चोभौ; S भीमो. — b) Ś1 K1 दृढबाहु°; T G भीमबाहु°. — After 12ab, S ins.:

1154* भीमकर्मा सुबाहुश्च भीमविक्रान्त एव च ।

— c) T2 G (except G1) रूढकर्मा च. — d) Ś1 Ko-2.4 °रथाह्वयः; K3 B1.5.6 D2.4 °रथश्च यः; Ñ °रथास्तु (Ñ2 °श्च) यः; B3 Dn D1 °रथाश्रयः.

13 a) Ś1 K1 अनाधृष्टः. M6-8 अधृष्यः कुंडभेदी च. — b) Ko विनादी; K2 °राजा; K3 D2 °षादी; K4 °रजो; D5 °रजा; G1 वराचिर्; G3 विराटी; M5 वीराशी. Dn D1 चित्रकुंडलः. — After 13ab, N ins.:

1155* प्रमथश्च प्रमाथी च दीर्घालातश्च वीर्यवान् ।

[ Ś1 K1 प्रमाथश्च; D2 प्रश्रव° (for प्रम°). K2 दीर्घतालश्च; K3 वसुदान°; K4 D5 दीर्घ°; Ñ1.2 दीर्घलाभ°; B1.3.6 D4 दीर्घनाभ°; B5 Dn D1 दीर्घरोम°; Da दीर्घलोभ°. ]

—S, on the other hand, ins. after 13ab:

1156* दीर्घध्वजो दीर्घभुज अदीर्घो दीर्घ एव च ।

[ G3 दीर्घजिह्वो. G6 °जंघः; M6-8 °बाहुः (for °भुजः). M सुदीर्घो. M3 (*inf. lin.*) दीर्घलोचनः (for दीर्घ एव च). ]

— d) Ñ B (except B1) Dn D5 G4 व्यूढोरः; T1 G1-3 M °राः; G5 व्यूढो वा. — After 13, S ins.:

1157* महाकुण्डश्च कुण्डश्च कुण्डजश्चित्रजस्तथा ।

[ G3 महाकालश्च. M6-8 दंडश्च (for कुण्डश्च). ]

14 a) K2-4 D5 चिरजश्चैव. S असन(G1.4 अनश्च-; G5 असेन)श्चित्रकश्चैव. — b) Ñ3 सर्वे सर्वास्त्रकोविदाः; S दुःशला चैव भारत. — D2.4 om. 14cd. — c) N (D2.4 om.) इति पुत्रशतं. — d) Ś1 K Ñ3 B3.6 Dn कन्या चैव; D5 कन्यैका च. Ś1 K (except Ko) Ñ B (except B5) Dn D1.5 शताधिका; M3 शतात्परा (*inf. lin.* प्रकी° as in text).

15 a) Ko.2.4 B6 Dn3 D1 °पूर्वेण; K3 Ñ1.2 °धेयानि स(K3 पू)र्वेषां; Ñ3 °पूर्व्येषां; M °पूर्व्यात्तु (M5 °पूर्वैषां). — b) Ś1 सर्वक्षयं; K1 जन्मक्षयौ; Ñ1.2 °क्रमान्; M5 जन्म ततो. M3.6-8 जन्म चैषां ततो भवेत् (M3 तथाभवत्). — c) T1 चातिरथाः; G4-6 [ऽ]प्यति°; M5-7 महा°. Ś1 K1 वीराः. — d) K4 G3 बुद्धिविशा°; G4 युधि विशा°.

16 D2 om. 16-17. — a) T G वेदविनीताश्च. — b) N (D2 om.) M5 सर्वे सर्वास्त्र(Ś1 शास्त्रार्थ-; Ñ3 सर्वार्थ-; D4.5 शस्त्रास्त्र)को°; T2 G °षु चाभवन्; M3.6-8 राजधर्मेषु को°. — cd) N om. 16cd. S सर्वे संसक्तविद्याश्च (G6 °स्तु) मुख्याभिजन(G6 °भिस्तु न)शोभिताः.

17 D2 om. 17 (cf. v. l. 16). — a) T G (except G1) °रूपं च. — b) Ś1 K3.4 B5 D5 T G M3 कृतदाराः. S कृताश्रमाः (for मही°). — c) G1.2 धृतराष्ट्रस्तु. — d) K2.4 निरीक्ष्य; D (D2 om.) परी°. Ś1 K (except Ko.3) D (except Da; D2 om.) नृप; G5 कृताः (for तदा).

18 ab) N °लां चापि समये धृतराष्ट्रो नराधिपः (K Ñ2 B5 Da D5 जनाधिपः; N1.3 B1.3.6 D2 महीपतिः). — d) T G सुबलानुमते (G6 सौबलानुमतात्). N विधिना भरतर्षभ (Ko Da °भः; K3 नरपुंगव). — After 18, S ins.:

1158* इति पुत्रशतं राजन्युयुत्सुश्च शताधिकः ।

# १०९

जनमेजय उवाच ।

कथितो धार्तराष्ट्राणामार्षः संभव उत्तमः ।
अमानुषो मानुषाणां भवता ब्रह्मवित्तम ॥ १
नामधेयानि चाप्येषां कथ्यमानानि भागशः ।
त्वत्तः श्रुतानि मे ब्रह्मन्पाण्डवानां तु कीर्तय ॥ २
ते हि सर्वे महात्मानो देवराजपराक्रमाः ।
त्वयैवांशावतरणे देवभागाः प्रकीर्तिताः ॥ ३
तस्मादिच्छाम्यहं श्रोतुमतिमानुषकर्मणाम् ।
तेषामाजननं सर्वं वैशंपायन कीर्तय ॥ ४

वैशंपायन उवाच ।

राजा पाण्डुर्महारण्ये मृगव्यालनिषेविते ।
वने मैथुनकालस्थं ददर्श मृगयूथपम् ॥ ५
ततस्तां च मृगीं तं च रुक्मपुङ्खैः सुपत्रिभिः ।
निर्बिभेद शरैस्तीक्ष्णैः पाण्डुः पञ्चभिराशुगैः ॥ ६
स च राजन्महातेजा ऋषिपुत्रस्तपोधनः ।
भार्यया सह तेजस्वी मृगरूपेण संगतः ॥ ७
संसक्तस्तु तया मृग्या मानुषीमीरयन्गिरम् ।
क्षणेन पतितो भूमौ विललापाकुलेन्द्रियः ॥ ८ C. 1. 4565 B. 1. 118. 8 K. 1. 123. 15

---

कन्यका दुःशला चैव यथावत्कीर्तितं मया ।
[ (L. 1) T1 इदं (for इति). M3.6–8 राज्ञः (for राजन्). — (L. 2) G3.4 कीर्तिता मया; M °तास्तथा. ]

Colophon. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 K Ñ B1.3.6 D T1 संभव. — *Adhy. name:* K3 धार्तराष्ट्राभिधानकथनं; Ñ1.2 धृतराष्ट्रपुत्रनामकथनं; M6–8 दुर्योधनादिशतसंकीर्तनं. — *Adhy. no.* (figures, words or both): Ko 111; B1 Dn2 D4 115; Dn3 116; T1 113; T2 63; G M 64. — *S'loka no.:* Dn 18; M3 19. — *Aggregate s'loka no.:* Dn2 4567.

☞ After adhy. 108, S reads 1. 114. 15ff. (cf. v. l. 1. 106. 11).

## 109

☞ S om. 1–4, and reads the rest of this adhy. (with v. l.) after 1. 106. 11.

1 Ś1 K1 D5 om. उवाच. — [a]) Dn D1.4 Cd अमनुष्यो. K1 B1 Dn D1.5 म(B1 D5 मा)नुष्याणां. — [d]) Ñ B D (except D5) ब्रह्मवादिना.

2 S om. 2 (see above). — [a]) K3 Ñ1.2 B1.6 D2 वै (for मे). — [d]) Dn D1.4 च (for तु). Ñ2 D5 °वानुकी°.

3 S om. 3 (see above). — [b]) D5 °समप्रभाः. — [c]) Ś1 K1 त्वया वंशा°; K4 D5 °वतारेण.

4 S om. 4 (see above). — [a]) Da2 Dn एतद् (for तस्माद्). K2 इच्छामहे. — [c]) K3 °नं पुण्यं.

5 For sequence of S see above. — Ś1 K1 D5 S om. उवाच. — [ab]) S अथा(T2 G5.6 तदा-; G4 तथा)साद्य महारण्यं °षेवितं. — [c]) Ñ1.2 B (except B5) D (except D5) चरन्; S तत्र (for वने). Ś1 K1 °काम°; Ñ2 B1 D (except D2.4.5) °धर्मं°; B6 °धर्मेण. — [d]) Ś1 वनयूथ°.

6 [a]) T1 G2.4 M3.5 ततस्तं; T2 मृगं तां; G1 तत्रस्थां; G5.6 स च तं. S मृगीं (G3 M6–8 °गं) चैव. — [b]) K4 रुक्मपत्रैः. Ś1 K1 सुमंत्रितैः; K3 पतत्रिभिः; Ñ1.2 D2 स्व(Ñ2 सु)यंत्रितैः; B (except B6) °पत्रितैः; S °वाजितैः (T2 G6 °भिः). — [c]) S शरैस्तूर्णं. — [d]) S (except G1) °भिरायसैः.

7 [a]) S (except T1 G6 M3.5) स चचार (G5 before corr. as in text). — [b]) M6–8 ह्यषिपुत्रः(!). T1 G3 M3 तपोन्वितः (G3 °तैः); T2 G2.4 ततो द्विजः; G5.6 M5 °युतः; M6–8 ततोन्वितः. — After 7, G1.2.4 ins.:

1159* मृगो ऋषिर्मृगी भार्या उभौ तौ तपसान्वितौ ।
रेमाते विपिने भूत्वा निरङ्कुशरतेक्षणौ ।
[ (L. 2) G1 रमेतां and °रतेक्षणः. ]

8 [a]) K1 स (for सं-). K4 तां; Ñ1.2 Dn D1.4 च (for तु). Ś1 स च सक्तः; S स संयुक्तः (for संस°). Ś1 K2 T2 तथा मृग्या; Ko तया सार्धं. — [b]) S °षीं वाचमीरयन्. — [c]) K2.4 न्यपतद्भूमौ. — [d]) S °लापातुरो (G3 °कुलो) मृगः.

9 K1 G3 M3.5 om. उवाच; the rest of S om. the ref. — [a]) Ś1 K1 वा; K2.4 Ñ1.2 ये; K3 B Da1 D2 हि (B1m °द्धि) (for अपि). S °मन्युवशं प्राप्ता (G3 °प्तौ; G5 °प्तः). — [b]) K2.4 Ñ B D बुध्या विरहिता अपि (Ñ3 तथा) (D5 बुद्धियां गर्हितापि च); S बुध्यं(G5 वध्यं)तरगता अपि.

C. 1. 4566
B. 1. 118. 9
K. 1. 123. 16

मृग उवाच ।
काममन्युपरीतापि बुध्यङ्गरहितापि च ।
वर्जयन्ति नृशंसानि पापेष्वभिरता नराः ॥ ९
न विधिं ग्रसते प्रज्ञा प्रज्ञां तु ग्रसते विधिः ।
विधिपर्यागतानर्थान्प्रज्ञा न प्रतिपद्यते ॥ १०
शश्वद्धर्मात्मनां मुख्ये कुले जातस्य भारत ।
कामलोभाभिभूतस्य कथं ते चलिता मतिः ॥ ११
पाण्डुरुवाच ।
शत्रूणां या वधे वृत्तिः सा मृगाणां वधे स्मृता ।
राज्ञां मृग न मां मोहात्त्वं गर्हयितुमर्हसि ॥ १२
अच्छद्मनामायया च मृगाणां वध इष्यते ।
स एव धर्मो राज्ञां तु तद्विद्वान्किं तु गर्हसे ॥ १३
अगस्त्यः सत्रमासीनश्चचार मृगयामृषिः ।
आरण्यान्सर्वदैवत्यान्मृगान्प्रोक्ष्य महावने ॥ १४
प्रमाणदृष्टधर्मेण कथमस्मान्विगर्हसे ।
अगस्त्यस्याभिचारेण युष्माकं वै वपा हुता ॥ १५
मृग उवाच ।
न रिपून्वै समुद्दिश्य विमुञ्चन्ति पुरा शरान् ।
रन्ध्र एषां विशेषेण वधकालः प्रशस्यते ॥ १६
पाण्डुरुवाच ।
प्रमत्तमप्रमत्तं वा विवृतं घ्नन्ति चौजसा ।
उपायैरिषुभिस्तीक्ष्णैः कस्मान्मृग विगर्हसे ॥ १७

---

Cd cites बुध्द्यंग- (text) as a pāṭha, and mentions the आर्षसंधि. — $^{a}$) K1.2 Ñ B (except B5) D (except Da D2) °ष्वपि रता; Cd as in text.

10 $^{b}$) Ś1 च; T G2–4 हि; G6 तां (for तु). — $^{d}$) Ś1 (*sup. lin.*) Da1 D4 Nīlp प्रज्ञावान्; Ko.4 Ñ1.2 B5 Dn प्राज्ञो न; Ñ3 प्रज्ञा नु. S प्रज्ञया (G1 प्राज्ञयः; M5 प्रज्ञाया) परिपश्यति (G2 °द्दश्यते). Cd cites the entire pāda exactly as in text!

11 $^{a}$) D5 सर्वधर्मा°; S तव (G5.6 तस्माद्) धर्मात्मनो (G3.4 M3.6–8 °नां; M5 °ना). — $^{b}$) B3.6 Da D2 G2.4 भारते. — $^{d}$) D5 चलितं मनः. S क(G2 त)स्माद्वि(G1.5.6 M5 °त्ते; G3 °द्रा)चलि(G5 प्लावि)ता मतिः.

12 K1 S om. उवाच. — $^{a}$) S या वै (G3 तु) शत्रुवधे वृत्तिः. — $^{b}$) S °धे ध्रुवा. — $^{c}$) Ko D5 राज्ञो. Ś1 नो मृग मां मोहात्; Ko मृग नामाहार्थं (sic); Ñ1 च मृग संमोहात्; Ñ2 Da च मृगयामाहुः; B D2 च मृगयां मोहात्; D5 मा मृग मोहात्त्वं; S मृग विजानीहि (T2 G2.4 विहाराणां; G6 वनानीह). Nīlp मृगयुतां (for मृग न मां). — $^{d}$) Ko D5 मां (for त्वं). Ñ1.2 B Da D2 न त्वं (Ñ2 Da मां) गर्हितुम°; S किं त्वं मोहाद्विगर्हसे.

13 K2 om. 13; G5 om. 13–$15^{ab}$. — $^{a}$) S (G5 om.) अमायया ह्यच्छलेन. — $^{b}$) Ñ3 इत्यपि; D5 उच्यते (for इष्य°). S (G5 om.) °णामिषुधारिभिः. — $^{c}$) Ś1 K1 स चैव; Da स एष. Ś1 D5 च; Ñ1 हि (for तु). S (G5 om.) वध एव भवेद्धर्मः. — $^{d}$) Ś1 Ko.4 Ñ B Da D2 T1 G4 M3.5 तद्विद्वन्; Dn D1.4 तद्धि त्वं. Ko.3.4 Da1 D2 किं नु गर्हसि; Da2 क्षंतुमर्हसि; S (G5 om.) किं विगर्ह°.

14 G5 om. 14 (cf. v. l. 13). Ś1 K1 (hapl.) om. 14–$15^{ab}$. — $^{b}$) Ko Da D5 T G1.3.6 M3.5.6.8 चचार; (as in text); the rest चका°. — $^{c}$) Da2 S (G5 om.) °देवत्यान् (T1 °देवेभ्यः; M3.5 °देवार्थं). — $^{d}$) S (G5 om.) पशून्. K4 प्रेप्सु; T1 G3.4 प्रेक्षन्; G1 प्रेषन्; M प्रोक्षन्.

15 Ś1 K1 G5 om. $15^{ab}$ (cf. v. l. 13, 14). — $^{a}$) B3 T1 G6 M °दृष्टं. S (G5 om.) -धर्मस्य. — $^{b}$) Ko Ñ3 B1 शस्तः कस्माद्; S (G5 om.) शास्त्रं किं त्वं (T1 by transp. त्वं किं; G1 त्वं वै). K3 अगस्त्यस्तान्न गर्हयेत्; D5 शस्तः कस्माद्विगर्हितः. — $^{c}$) Ñ2 B5.6 °पचारेण; T1 G3 °भि(G3 °पि)शापेन; Nīlp अतिचारेण. — $^{d}$) Ñ B5.6 हि; B Da Dn D1.4 च (for वै). K2 परासुता; Ñ1.2.3 (*inf. lin. sec. m.*) B5 विपद्ग(B5 °त्कृ)ता; G6 हृतावपि (for वपा हुता). Ko.3 D5 वध एव च; K4 वध आहितः; D2 चैव हिंसया; T G1–3 M विहितो वधः (for वै वपा हुता). — G4 (? hapl.) om. $15^{d}$–$16^{c}$.

16 G4 om. $16^{abc}$ (cf. v. l. 15). M6–8 transp. 16 and 17. Ś1 K1 M6–8 om. उवाच; the rest of S om. the ref. — $^{a}$) Ś1 K D5 नः (for वै). Da D1 नारिपून्वै; S (G4 om.) मृगानेव. — $^{b}$) T1 G3 विसृजंति; G5.6 °चरंति. Ñ1.2 B D नराः (D5 पुरः); G3 पुनः; G5.6 रिपून् (for पुरा). — After $16^{ab}$, S (except G4) ins.:

1160* न रिपूणां समाधानं परीप्सन्ते पुरातनाः ।

[ T2 G5.6 M3.5 परीक्षंते; G3 °प्सेते. T1 पुरा नराः; T2 G2 परं नराः; G3 पुरा नरान्. ]

— $^{c}$) K2.4 B1m.3.5 D2 रंध्र एव (D2 °वं); K3 न तु तेषां; D5 वध एषां. — $^{d}$) K2.4 B5 Da D1.2 वधः काले; B1 D5

G. 1. 6626 B. 1. 178. 43 K. 1. 189. 49
तत्क्षुधार्तैर्निरानन्दैः शवभूतैस्तदा नरैः ।
अभवत्प्रेतराजस्य पुरं प्रेतैरिवावृतम् ॥ १६
ततस्तत्तादृशं दृष्ट्वा स एव भगवानृषिः ।
अभ्यपद्यत धर्मात्मा वसिष्ठो राजसत्तमम् ॥ १७
तं च पार्थिवशार्दूलमानयामास तत्पुरम् ।
तपत्या सहितं राजन्नुषितं द्वादशीः समाः ॥ १८
ततः प्रवृष्टस्तत्रासीद्यथापूर्वं सुरारिहा ।
तस्मिन्नृपतिशार्दूले प्रविष्टे नगरं पुनः ॥ १९
ततः सराष्ट्रं मुमुदे तत्पुरं परया मुदा ।
तेन पार्थिवमुख्येन भावितं भावितात्मना ॥ २०
ततो द्वादश वर्षाणि पुनरीजे नराधिपः ।
पत्न्या तपत्या सहितो यथा शक्रो मरुत्पतिः ॥ २१
एवमासीन्महाभागा तपती नाम पौर्विकी ।
तव वैवस्वती पार्थ तापत्यस्त्वं यया मतः ॥ २२
तस्यां संजनयामास कुरुं संवरणो नृपः ।
तपत्यां तपतां श्रेष्ठ तापत्यस्त्वं ततोऽर्जुन ॥ २३

इति श्रीमहाभारते आदिपर्वणि त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥

---

1742* ततस्तस्यामनावृष्ट्यां प्रवृत्तायामरिंदम ।
प्रजाः क्षयमुपाजग्मुः सर्वाः सस्थाणुजङ्गमाः ।
तस्मिंस्तथाविधे काले वर्तमाने सुदारुणे ।
नावश्यायः पपातोर्व्यां ततः सस्यानि नारुहन् ।
ततो विभ्रान्तमनसो जनाः क्षुद्भयपीडिताः ।
गृहाणि संपरित्यज्य बभ्रमुः प्रदिशो दिशः ।
ततस्तस्मिन्पुरे राष्ट्रे त्यक्तदारपरिग्रहाः ।
परस्परममर्यादाः क्षुधार्ता जघ्निरे जनाः ।

[ (L. 2) B6 स्थावरजंगमाः. — (L. 4) K4 नाल्पापोपि; D5 न चाल्पापः (for नावश्यायः). — (L. 6) K4 B5 D2.4 दृश (for दिशः). ]

16 $^{a}$) G1 तृट्क्षुधार्तैर्. K4 Ñ1.2 V1 B D निराहारैः. — $^{b}$) Ś1 K0–2 श्यामभूतैस्; K3 शवी°; K4 Ñ3 Da M Cd श्याव°; Arjp शव° (as in text) and शर°. Ś1 K4 Ñ V1 B D (except D2) T1 G3 तथा. ❀Arj.: शरभूतैरिति पाठश्चिन्त्यः।❀ — After $16^{ab}$, B6 ins.:

1743* स्नाय्वस्थिशेषैर्निर्मांसैर्धमनीसंततैर्भृशम् ।

17 $^{a}$) K3 Ñ1.3 B5.6 D1.4 T2 G3.5.6 तं; B1 D2 तु (for तत्). — $^{c}$) Ñ2 V1 Dn D1 अभ्यवर्षत(!); B1.3 D2 प्रत्यपद्यत; T1 G2.3 अभ्यद्रवत. — $^{d}$) Ñ V1 B6 Da Dn D1 मुनिसत्तमः; B1.3 D2 ब्रह्मवित्तमः; B5 धर्मवित्तमः; D4 भगवानृषिः; S नर(G4 नृप)सत्तमं.

18 D1 om. $18^{a}$–$19^{b}$; G6 om. $18^{ab}$. — $^{c}$) T2 G4–6 तत्र (for राजन्). — $^{d}$) K (except K1) Ñ V1 B5 Dn D5 ह्युषितं. Ñ2 V1 B5.6 Da Dn D4 शाश्वतीः समाः; Cd as in text. S वर्षे द्वादशमे गते.

19 D1 om. $19^{ab}$ (cf. v. l. 18). — $^{a}$) Ś1 K (except K2) B1 Da D2 T1 G1.2.6 प्रविष्टः; T2 G4.5 M6–8 °हृष्टः. T2 G5.6 पर्जन्यो; M5 तत्राथ (for तत्रासीद्). — $^{b}$) S यथाकालं. G6 अरिंदम. — $^{c}$) D1 तं च पार्थिवशार्दूले. — $^{d}$) T2 G4–6 नगरीं. — After 19, Ñ1.2 V1 B D ins.:

1744* प्रववर्ष सहस्राक्षः सस्यानि जनयन्प्रभुः ।

20 $^{a}$) B5 D4.5 स राजा; G3 स्वराष्ट्रं. — $^{b}$) K1 Da1 D4 तत्परं; D1 प्रचुरं. — B1 om. $20^{cd}$. — $^{c}$) K3 पार्थिवसिंहेन.

21 $^{b}$) G1.3.6 M (except M5) जनाधिपः. — $^{c}$) Ñ1.2 V1 B D (except D5) तपत्या सहितः पत्न्या. — $^{d}$) Ñ3 V1 D (except D2.4.5) T G4–6 यथा शच्या.

22 Before 22, Ś1 K1 ins. गंधर्वः; K0.2–4 Ñ3 V1 B1.6 D (except Da) गंधर्व उ°. — $^{a}$) Ś1 K1.3.4 B6 महाभाग; G3 महाराज. — $^{b}$) K1 तात (for नाम). K3 पूर्वजा; K4 पूर्विकी; Ñ1 D5 S पू(D5 T2 G6 पौ)र्विका; Cd पौर्विका. — $^{c}$) T2 G4–6 सैषा वैवस्वती कन्या. — $^{d}$) K1.4 G1–3 यथा (for यया). T2 G4–6 लब्धा संवरणेन च.

23 $^{a}$) K0.3 B3 D1 M (except M6) स जन°. — $^{d}$) B1.5 Dn1.n2 D1.4 यया मतः (cf. $22^{d}$); G1 अतोर्जुन; G3 इतो°; M (except M5) मतो°. — After 23, K4 D4 (marg. *sec. m.*).5 ins.:

1745* दश वर्षसहस्राणि विहृत्य स तया सह ।
अभिषिच्य कुरुं राज्ये तपस्तप्त्वा तपोधनः ।
आदित्यलोकं च ततो जगाम भरतर्षभ ।;

while T1 G2.4 ins.:

1746* कुरूद्भवा यतो यूयं कौरवाः कुरवस्तथा ।
पौरवा आजमीढाश्च भारता भरतर्षभ ।
तापत्यमखिलं प्रोक्तं वृत्तान्तं तव पूर्विकम् ।
पुरोहितमुखा यूयं भुङ्ध्वं पृथिवीमिमाम् ।

Colophon. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ñ1.2 V1 चैत्ररथ. Ś1 K Ñ3 B D T2 G1 M3.5 (all om. the sub-parvan name) mention

## १६४

वैशंपायन उवाच ।
स गन्धर्ववचः श्रुत्वा तत्तदा भरतर्षभ ।
अर्जुनः परया प्रीत्या पूर्णचन्द्र इवाबभौ ॥ १
उवाच च महेष्वासो गन्धर्वं कुरुसत्तमः ।
जातकौतूहलोऽतीव वसिष्ठस्य तपोबलात् ॥ २
वसिष्ठ इति यस्यैतदृषेर्नाम त्वयेरितम् ।
एतदिच्छाम्यहं श्रोतुं यथावत्तद्वदस्व मे ॥ ३
य एष गन्धर्वपते पूर्वेषां नः पुरोहितः ।
आसीदेतन्ममाचक्ष्व क एष भगवानृषिः ॥ ४
गन्धर्व उवाच ।
तपसा निर्जितौ शश्वदजेयावमरैरपि ।
कामक्रोधावुभौ यस्य चरणौ संववाहतुः ॥ ५
यस्तु नोच्छेदनं चक्रे कुशिकानामुदारधीः ।
विश्वामित्रापराधेन धारयन्मन्युमुत्तमम् ॥ ६
पुत्रव्यसनसंतप्तः शक्तिमानपि यः प्रभुः ।
विश्वामित्रविनाशाय न मेने कर्म दारुणम् ॥ ७
मृतांश्च पुनराहर्तुं यः स पुत्रान्यमक्षयात् ।
कृतान्तं नातिचक्राम वेलामिव महोदधिः ॥ ८
यं प्राप्य विजितात्मानं महात्मानं नराधिपाः ।
इक्ष्वाकवो महीपाला लेभिरे पृथिवीमिमाम् ॥ ९
पुरोहितवरं प्राप्य वसिष्ठमृषिसत्तमम् ।
ईजिरे क्रतुभिश्चापि नृपास्ते कुरुनन्दन ॥ १० C. 1. 6643 B. 1. 174. 11 K. 1. 190. 12

---

only तापत्य (K3 तपत्याख्यान; M3.5 तापत्योपाख्यान); to it Ś1 K0–3 Ñ3 B6 Dn D1.2.4.5 T2 G1 M3.5 add समाप्त (K3 संपूर्ण); Ñ1.2 V1 तपत्युपाख्यानसमाप्ति. — *Adhy. name:* K0.4 तपतीप्राप्तिः; M3.5 संवरणविवाहः. — *Adhy. no.* (figures, words or both): Dn3 172; D4m 175; T1 171; T2 G M 123 (G1 125; G3 122). — *S'loka no.:* Dn 50; M3 28.

### 164

1 Ś1 K (except K0) D2.5 S om. उवाच. — b) T1 G1.2 तथा (for तदा). A few MSS. °र्षभः. — c) D4 परम- (for परया). K4 Ñ2 V1 B1.3 Dn D1.5 भक्त्या; M7 भीत्या.

2 a) T2 G4–6 महाप्राज्ञो; G1 महीपालो (for महे°). — c) Ś1 कौतूहलं ममातीव; Ś1m K0.2–4 कौतूहलपरोतीव (K0 वीर); K1 कौतूहलप्लुतो° (sic). — d) D5 °ष्ठं श्रुतवान्यदा.

3 Before 3, D4.5 ins. अर्जुन उ°; S अर्जुनः. — a) Ñ2 V1 Dn M5–8 तस्य; T1 G1–3 M3 कस्य (for यस्य). — b) D4.5 त्वयोदितं; G4 समी°; G6 तवे°. — d) T1 G1–3 M यथावत्तद्ब्र(M3.5 °वत्प्रब्र)वीहि मे.

4 a) T G1.2.5.6 स; G4 क (for य). T2 G5.6 एव (for एष). — c) B3 चैतन्; T1 G2 एनं. Ś1 K1 समाचक्ष्व. — d) K0.4 °ष ऋषिसत्तमः. — After 4, D5 ins.:

1747* सुभिक्षं राज्यं लब्धं वै वसिष्ठस्य तपोबलात् ।

5 Ś1 K1 S om. उवाच. — After गन्धर्व उ° (resp. its v. l.), Ñ1.2 V1 D (except Da) S ins.:

1748* ब्रह्मणो मानसः पुत्रो वसिष्ठोऽरुन्धतीपतिः ।

— c) Ś1 K1 G3 तस्य. — After 5, Ñ2 V1 ins.:

1749* इन्द्रियाणां वशकरो वशिष्ठ इति चोच्यते ।;

while S (except G6 M5) ins.:

1750* यथा कामश्च क्रोधश्च निर्जितावजितौ नरैः ।
जितारयो जिता लोकाः पन्थानश्च जिता दिवः ।

6 a) Ś1 K Ñ3 स; S (except T2 G5) च (for तु).

7 b) Ñ2 V1 B D (except D2.5) °नप्यशक्तवत्. — d) K1.2 (both marg.) Ñ2 V1 B D (except D5) T1 न चक्रे. T2 G4–6 मेने कर्म न (T2 G5 सु-) दारुणं.

8 a) T1 G1–3 M6–8 आनेतुं; Cd आहर्तुं (as in text). — b) K0.3 Ñ2 V1 B5.6 Dn2 D4.5 S शक्तः (for यः स). — c) Ñ1 °तं नाक्रमदसौ.

9 a) Ñ1 विदिता°; B1 (m as in text) Da1m Cd Arjp विश्रुता°; G1 पूजिता°. — b) Ñ1 विदितात्मवरा°; G2 वसिष्ठमृषिसत्तमं. — c) K0.2 Ñ1.3 B1m T2 G4–6 M ऐक्ष्वा°.

10 a) Ñ2 V1 B D (except D4) M3 °हितमिमं (D2 °तमनु-). — c) Ñ1.2 V1 B D (except Da1 D5) M3.5 चैव (for चापि). — d) Ś1 कुरुवर्धन; D5 °सत्तम.

11 b) Ś1 K1 °वांस्तान्नृपसत्त°; B5 °तिनंदनान्. — c) M3.5 महर्षिः. G3 पार्थिव°. — After 11, T G (except G3) ins.:

C. 1. 6644 B. 1. 174. 12 K. 1. 190. 18 स हि तान्याजयामास सर्वान्नृपतिसत्तमान् ।
ब्रह्मर्षिः पाण्डवश्रेष्ठ बृहस्पतिरिवामरान् ॥ ११
तस्माद्धर्मप्रधानात्मा वेदधर्मविदीप्सितः ।
ब्राह्मणो गुणवान्कश्चित्पुरोधाः प्रविमृश्यताम् ॥ १२
क्षत्रियेण हि जातेन पृथिवीं जेतुमिच्छता ।
पूर्वं पुरोहितः कार्यः पार्थ राज्याभिवृद्धये ॥ १३
महीं जिगीषता राज्ञा ब्रह्म कार्यं पुरःसरम् ।
तस्मात्पुरोहितः कश्चिद्गुणवानस्तु वो द्विजः ॥ १४

इति श्रीमहाभारते आदिपर्वणि चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥

## १६५

अर्जुन उवाच ।
किंनिमित्तमभूद्वैरं विश्वामित्रवसिष्ठयोः ।
वसतोराश्रमे पुण्ये शंस नः सर्वमेव तत् ॥ १
गन्धर्व उवाच ।
इदं वासिष्ठमाख्यानं पुराणं परिचक्षते ।
पार्थ सर्वेषु लोकेषु यथावत्तन्निबोध मे ॥ २
कन्यकुब्जे महानासीत्पार्थिवो भरतर्षभ ।
गाधीति विश्रुतो लोके सत्यधर्मपरायणः ॥ ३
तस्य धर्मात्मनः पुत्रः समृद्धबलवाहनः ।
विश्वामित्र इति ख्यातो बभूव रिपुमर्दनः ॥ ४
स चचार सहामात्यो मृगयां गहने वने ।
मृगान्विध्यन्वराहांश्च रम्येषु मरुधन्वसु ॥ ५
व्यायामकर्शितः सोऽथ मृगलिप्सुः पिपासितः ।
आजगाम नरश्रेष्ठ वसिष्ठस्याश्रमं प्रति ॥ ६

---

1751* तथा वसिष्ठेन सह सौदासः संगतस्तदा ।
रक्षोभिर्विप्रयुक्तस्तु विश्वामित्रेण योजितैः ।
तथा द्विजसहायाद्धि न गन्धर्वा न राक्षसाः ।
शक्ताः प्रार्थयितुं वीर मनसापि महाबलाः ।

12 a) T1 G2 °ब्रह्मप्र°; T2 G4.5 °प्रधानस्तु. — b) S वेदशास्त्रवि° (T2 G4.5 °दीपितः; G6 °प्रदीपितः). — c) T1 G2 ज्ञान° (for गुण°). — d) Ñ1 प्रविमृग्य°; Ñ2 V1 B (B8 marg.) Dn D1.2.4 प्रतिदृश्य° (B8 orig. प्रतिमृग्य°); Da प्रतिपाद्य°; D5 G3 परिगृह्य°; T1 G2 परिमृश्य°; T2 G1.4-6 M परिमृग्य° (M5 प्रतिगृह्य°).

13 a) Ñ2 V1 B (except B1) D T1 G2 °येणाभि- (D2 °याणां हि); T2 G5.6 °ण तु; G3 °णापि; G4 °णानु-. — d) S राज्यविवृ°.

14 a) Ś1 K D5 विजयता; Ñ3 °षया. Ñ1 G5 जिगीषतां राज्ञां. — b) S पुरस्कृतं. — c) T1 G1-3 M विद्वान् (for कश्चिद्). — d) Ñ1.2 V1 B D °णवान्विजितेंद्रियः; Cd as in text. — After 14, K4 Ñ1.2 V1 B D ins.:

1752* विद्वान्भवतु वो विप्रो धर्मकामार्थतत्त्ववित् ।
[ K4 Ñ1 B5.6 Da D4.5 °र्थमोक्षवित्. ]

an addition which was lacking in the text of Dev.!

Colophon om. in D4 T2 G1.4-6. — *Major parvan:* G2.3 M संभव° (for आदि°). — *Sub-parvan:* Ñ1.2 V1 चैत्ररथ; T1 संभव. Ś1 K Ñ3 B1.3.5 Da D2 (all om. the sub-parvan name) mention only वासिष्ठ (K3 वसिष्ठोपाख्यान). — *Adhy. name:* K0 D5 वसिष्ठमाहात्म्यं; K4 वसिष्ठवाक्यं. — *Adhy. no.* (figures, words or both): Dn3 173; T1 172; G2 M 124; G3 123. — *S'loka no.:* Dn1.n2 15; M3 16. — *Aggregate s'loka no.:* Dn2 6619.

## 165

1 Ś1 K1 S om. उवाच. — c) G6 वसिष्ठस्याश्रमे. Ñ1.3 T1 G1-3 M रम्ये; Ñ2 V1 B D दिव्ये; T2 G4-6 तत्र (for पुण्ये). — d) S तत् (for नः) and मे (for तत्).

2 Ś1 K1 S om. उवाच. — b) = 1. 13. 6b. D1 संप्रचक्ष°; M5 परिवर्त°. — c) K2.3 काले° (for लोके°). — d) Ñ3 यथावृत्तं निबो°.

3 a) Ñ V1 D4 S कन्याकु°; B D5 कान्य°. — d) Ñ2 V1 B D (except D5) कुशिकस्यात्मसंभवः.

4 K1 om. 4a. — d) T2 G5.6 रिपुनाशनः.

5 a) B6 (m as in text) बभूव. Ś1 सहामात्यं; K4 D1 G1 M3 महा°; G2 समा°. Ñ1 विश्वामित्रस्तु सामात्यो. — c) T2 G4.5 °यां स महावने; G3 °गयासुमहावने. — c) = 1. 166. 2c. T G (except G1) निघ्नन् (for विध्यन्). — d) D4 समेषु; T2 G4-6 चचार (for रम्ये°).

तमागतमभिप्रेक्ष्य वसिष्ठः श्रेष्ठभागृषिः ।
विश्वामित्रं नरश्रेष्ठं प्रतिजग्राह पूजया ॥ ७
पाद्यार्घ्याचमनीयेन स्वागतेन च भारत ।
तथैव प्रतिजग्राह वन्येन हविषा तथा ॥ ८
तस्याथ कामधुग्धेनुर्वसिष्ठस्य महात्मनः ।
उक्ता कामान्प्रयच्छेति सा कामान्दुदुहे ततः ॥ ९
ग्राम्यारण्या ओषधीश्च दुदुहे पय एव च ।
षड्रसं चामृतरसं रसायनमनुत्तमम् ॥ १०
भोजनीयानि पेयानि भक्ष्याणि विविधानि च ।
लेह्यान्यमृतकल्पानि चोष्याणि च तथार्जुन ॥ ११
तैः कामैः सर्वसंपूर्णैः पूजितः स महीपतिः ।
सामात्यः सबलश्चैव तुतोष स भृशं नृपः ॥ १२
षडायतां सुपार्श्वोरुं त्रिपृथुं पञ्चसंवृताम् ।
मण्डूकनेत्रां स्वाकारां पीनोधसमनिन्दिताम् ॥ १३ C. 1. 6661 B. 1. 175. 14 K. 1. 191. 16

---

6 a) A few MSS. °कर्षितः. T2 G (except G3) व्यायामार्तः स तु तदा. — b) G1 °लिप्सामुपागतः. — c) K2.4 G3.4 M5 °श्रेष्ठः; Ñ3 रथश्रेष्ठ; T2 G5.6 रथिश्रेष्ठः; G1 नृपश्रेष्ठः; M3 नरव्याघ्र.

7 a) D2 आयातं (for आगतं). T2 G4–6 वसिष्ठस्तु स तं दृष्ट्वा. — b) K3 D2 T1 G1 श्रेष्ठवागृ°; B5 श्रेष्ठतापसः; D1 G2 °वानृषिः. T2 G4–6 राजर्षिमतिथिं तदा. — c) Ś1 K नृपश्रेष्ठं; T2 G4–6 सशिष्यो वै.

8 a) Ñ2.3 V1 Dn D1 °नीयैस्तं; B Da D2.4.5 M5 °नीयैस्तु (B5 M5 °श्च); T2 G4–6 पाद्येनार्घ्यप्रदानेन. — b) T2 G4–6 तं नृपं (for भारत). — c) K2 Ñ1.2 V1 B D (except D1) परिजग्राह. T2 G4–6 प्रतिजग्राह धर्मात्मा. — d) K1 Ñ2 V1 B1.6 Dn3 D1.4 T2 G4–6 तदा; T1 G1–3 M (except M5) मुनिः.

9 a) T2 G4–6 तस्यैव. G4 कामधेनुस्तु. — c) K3 D1 उक्तान्का°. T2 G5.6 उक्ता नंदिनि धत्स्वेति. — d) Ś1 K D5 transp. सा and कामान्. Ñ2 V1 B1.3(m as in text).6 D (except D5) G4 दुह्यते. Ñ2 V1 B Da Dn1 D1.2.4.5 G4.5 सदा; Dn2.n3 T2 G6 तदा. — After 9, S ins.:

1753* बाष्पाढ्यस्यौदनस्यैव राशयः पर्वतोपमाः ।
निष्ठान्नानि च सूपांश्च दधिकुल्यास्तथैव च ।
कूपांश्च घृतसंपूर्णान्भक्ष्याणां राशयस्तथा ।
भोजनानि महार्हाणि तत्र तत्र सहस्रशः ।
इक्षून्मधु च लाजांश्च मैरेयांश्च वरासवान् ।
वस्त्राणि च महार्हाणि कम्बलानि सहस्रशः ।

[T1 G2.4 ऊष्माढ्य°; G1 उष्णाढ्य°; M3.5 सबाष्प°. — (L. 2) T1 G2 मृष्टान्ना°; G4 सुष्ठ्वन्ना°. — (L. 3) T2 G3–6 दधि° (for घृत°). T2 G4–6 गुडानां (for भक्ष्याणां). — (L. 4) G1 व्यंजनानि; M भाजनानि. T1 G2 M6–8 गौळान्नानि; G3 सगौळानि; M3.5 रौप्यादीनि (for तत्र तत्र). — (L. 5) T1 G2 ऐक्षवान्मधुलाजां°; G1 °न्मधूनि लाजां°.]

10 a) D5 T1 °रण्यान्. Ś1 Ñ2 V1 B6 Da Dn D1.4 चौषधीश्च; K0 Ñ3 औष°; D5 G2 औषधींश्च; G1 M6–8 औषधीस्तु. T2 G4–6 °रण्यौषधांश्चैव; M3.5 °रण्यानि दिव्यानि. — b) M3.5 (*inf. lin.* as in text) पक्वापक्वानि सर्वशः. — c) Ś1 K Ñ2.3 B6 Da Dn D1.5 °मृतनिभं (K1 °मिदं); B1.3 D2 °मृतप्रख्यं; G2 °मृतोपेतं. — d) G4 रसास्वादम्; Cd as in text.

11 a) Ś1 पानानि; K0.3.4 D5 भक्ष्याणि (for पेया°). — b) K0.3.4 D5 लेह्यानि (for भक्ष्या°). — c) K0.3.4 D5 चोष्याणि (for लेह्या°). — d) Ś1 K1 दूष्याणि; K0.3.4 D5 पेयानि; T G (except G1) शोष्याणि (for चोष्या°). T1 G1–3 M तथा पुनः. — After 11, K4 Ñ1.2 V1 B D ins.:

1754* रत्नानि च महार्हाणि वासांसि विविधानि च ।
[B1 D2 रुचिराणि (for विवि°).]

12 a) G4–6 °संपन्नैः. T G1–3 M यस्य यस्य यथाकामं. — b) Ñ2 V1 B3.5 Dn D1.4 च; B1 D2 तु (for स). T1 G2 स स तेन सुतर्पितः. — K3 om. 12cd. — c) Ś1 K1.2 सगण° (for सबल°). T2 G4–6 तत्र (for चैव). — d) Ñ1 Da T2 G5.6 M3.5 सुभृशं; D2.4 G3 M6–8 सहृशं; G1 च भृशं. K1 ततः; K4 पुनः; Ñ2 V1 B6 Da Dn1.n2 D1 T2 G1.3–6 M (except M3) तदा (for नृपः). T1 G2 तर्पितस्तोषितो भृशं. — After 12, K4 (marg.; om. lines 3 and 6) D5 ins.:

1755* शिरो ग्रीवा सक्थिनी च सास्नापुच्छमहस्तनाः ।
शुभान्येतानि धेनूनामायतानि प्रचक्षते ।
पृथुभिः पञ्चभी रङ्गैः समावृत्तां षडायताम् ।
ललाटं श्रवणे चैव नयनद्वितयं तथा ।
पृथून्येतानि शस्यन्ते धेनूनां पञ्च सूरिभिः ।
मण्डूकस्यैवमुच्छूने * * यस्याः षडायताम् ।

13 a) Ñ2 V1 Dn D1.2.4 T G Arjp षड्नतां; Cd as in text. Ś1 K1 सुपार्श्वां तां; G3 त्रिपार्श्वों°. — b) N (including Cd) पृथुपंचसमावृतां (K0.2.3 Dn D1.4.5 °यतां).

14 a) K4 G3.6 M6.8 °लर्धीं. Ś1 K1 G1 M6–8 °कर्णीं. — b) K1 Ñ1 B (except B6) Da1 D2.5 °शृंगीं. Ñ1 T1

C. 1. 6662 B. 1. 175. 14 K. 1. 191. 16 सुवालधिं शङ्कुकर्णां चारुशृङ्गां मनोरमाम् ।
पुष्टायतशिरोग्रीवां विस्मितः सोऽभिवीक्ष्य ताम् ॥ १४
अभिनन्दति तां नन्दीं वसिष्ठस्य पयस्विनीम् ।
अब्रवीच्च भृशं तुष्टो विश्वामित्रो मुनिं तदा ॥ १५
अर्बुदेन गवां ब्रह्मन्मम राज्येन वा पुनः ।
नन्दिनीं संप्रयच्छस्व भुङ्क्ष्व राज्यं महामुने ॥ १६
वसिष्ठ उवाच ।
देवतातिथिपित्रर्थमाज्यार्थं च पयस्विनी ।
अदेया नन्दिनीयं मे राज्येनापि तवानघ ॥ १७
विश्वामित्र उवाच ।
क्षत्रियोऽहं भवान्विप्रस्तपःस्वाध्यायसाधनः ।
ब्राह्मणेषु कुतो वीर्यं प्रशान्तेषु धृतात्मसु ॥ १८
अर्बुदेन गवां यस्त्वं न ददासि ममेप्सिताम् ।
स्वधर्मं न प्रहास्यामि नयिष्ये ते बलेन गाम् ॥ १९
वसिष्ठ उवाच ।
बलस्थश्चासि राजा च बाहुवीर्यश्च क्षत्रियः ।
यथेच्छसि तथा क्षिप्रं कुरु त्वं मा विचारय ॥ २०
गन्धर्व उवाच ।
एवमुक्तस्तदा पार्थ विश्वामित्रो बलादिव ।
हंसचन्द्रप्रतीकाशां नन्दिनीं तां जहार गाम् ॥ २१
कशादण्डप्रतिहता काल्यमाना ततस्ततः ।
हम्भायमाना कल्याणी वसिष्ठस्याथ नन्दिनी ॥ २२

---

मनोहरां. T2 G4–6 पीनश्रोणिपयोधरां. — c) K0.2.3 B3 G1 Arjp अष्टा°; T1 G2.3.6 स्पष्टा°; T2 G4.5 अत्या°; Cd as in text. — After 14abc, T1 G2.4 ins.:

1756* सुपुष्टाङ्गीं सुयोनिकाम् ।
संभृतोभयपार्श्वोरूं दीर्घवालां पृथूदराम् ।
दृष्ट्वा गृष्टिमृषेर्भूपो.

— d) Ś1 K (except K4) गां (for तां). T1 G2.4 विस्मयाविष्टचेतनः (G2 °कृष्टचेतसः).

15 a) K1 Ñ1 S अभ्यनंदत्स तां (T2 G4–6 °त्सदा) नंदीं (T1 G2 अभ्यनंदन्नंदिनीं तां); K2 अभिनंदत तां नं°; K4 अभिवीक्ष्याथ तां नं°; Ñ2 V1 Da Dn D1 अभिनंद्य स तां राजन् (Ñ2 V1 राजा); B D2.4.5 नंदिनीमभ्यनंदत्तां (D2 °मभिनंद्याथ). — b) Cf. 31b. Ñ2 V1 D (except D2.4.5) नंदिनीं गाधिनंदनः; Ñ1 T2 G5.6 °स्य यशस्विनीं; T1 G2.4 °स्याग्निहोत्रिणीं. — c) K0.3.4 D5 हृष्टो (for तुष्टो). — d) K4 T2 G3–5 ऋषिं (for मुनिं). Ś1 प्रति (for तदा). K2.3 Ñ1.3 G6 °मित्र ऋषिं तदा; Ñ2 V1 B Da Dn D1.4 स राजा तमृषिं तदा; D2 स राजा मुनिसत्तमं.

16 Before 16, T1 G1.2 M6–8 ins. विश्वामित्रः. — b) T1 G1.3 M इमां; T2 G4–6 तथा (for मम). — c) K3 Ñ1 T1 G1–3 M मे (for सं·).

17 Ś1 K1 S om. उवाच. — b) K (except K1) B (except B6) Da D5 T1 G3 इज्यार्थं; Ñ V1 Dn D4 याज्या°; T2 G1.4–6 होमा°. K1 B3 T1 M5 यशस्विनी. — c) Ñ2 V1 B D °नीयं वै; T2 G4–6 °नी चेयं.

18 Ś1 K1 S om. उवाच. — After विश्वा° (resp. its v. l.), D4 (marg. sec. m.) S ins.:

1757* रत्नं हि भगवन्नेतद्रत्नहारी च पार्थिवः ।

— d) K0.3.4 °षु कृतात्मसु; Dn1 D1 °ष्ववृता°; T1 G2 °षु जिता°; G5 M5 °षु महा°.

19 a) G3 च; G4 त्वत् (for यस्). K3 D1 तु; G4 नो (for त्वं). — b) G4 ददासीह (for न ददासि). K3 मयेप्सि°; K4 Ñ2 V1 B6 Da Dn D5 T2 G1–3.5 °प्सितं; Ñ3 B1.3 D1.2.4 यथेप्सितं. — G3 om. 19c–20d. — d) Ñ2 V1 B D G4 नेष्यामि च; G2 ह्यानयिष्ये; G4 स नेष्येते. — After 19, T G (except G3) ins.:

1758* क्षत्रियोऽस्मि न विप्रोऽहं बाहुवीर्योऽस्मि धर्मतः ।
तस्माद्भुजबलेनेमां हरिष्यामीह पश्यतः ।

20 Ś1 K1 S om. उवाच (G3 om. the ref.). — After वसिष्ठः, T G (except G2.3) ins.:

1759* अत्र हव्यं च कव्यं च प्राणयात्रा तथैव च ।
आयत्तमग्निहोत्रं च आतिथ्यं च न संशयः ।
बहुना किं प्रलापेन न दास्ये कामदोहिनीम् ।
[ (L. 1) T2 G4.5 transp. हव्यं and कव्यं. ]

— G3 om. 20 (cf. v. l. 19). — a) K0.3.4 बलवान्; K2 सैन्यस्थः. T1 G2 चापि; M5 अपि हि. — b) T2 G1.4–6 पार्थिवः (for क्षत्रियः). T1 G2 वीर्यवान्क्षत्रजीविकः; M वीर्यवांस्त्वं नृपोत्तम. — d) Ñ2 V1 B D (except D5) G1.4 transp. त्वं and मा. — After 20, T G (except G1.3) ins.:

1760* रत्नद्वयं ब्राह्मणस्य नापहार्यं नृपैर्भुवि ।
अग्निहोत्री च गौः पत्नी प्रजारणिरनुत्तमा ।

21 Ś1 K S om. उवाच (M3 om. the ref.). — a) Ś1 ततः; Ñ V1 B6 Dn D5 तथा. — b) G1 बलाधिकः. — d) T1 G2.3 M (except M5) transp. तां and गां. T2 G1.4–6 वै (for तां). — After 21, D4 (marg. sec. m.)

आगम्याभिमुखी पार्थ तस्थौ भगवदुन्मुखी ।
भृशं च ताड्यमानापि न जगामाश्रमात्ततः ॥ २३

वसिष्ठ उवाच ।

शृणोमि ते रवं भद्रे विनदन्त्याः पुनः पुनः ।
बलाद्ध्रियसि मे नन्दि क्षमावान्ब्राह्मणो ह्यहम् ॥२४

गन्धर्व उवाच ।

सा तु तेषां बलान्नन्दी बलानां भरतर्षभ ।
विश्वामित्रभयोद्विग्ना वसिष्ठं समुपागमत् ॥ २५

गौरुवाच ।

पाषाणदण्डाभिहतां क्रन्दन्तीं मामनाथवत् ।
विश्वामित्रबलैर्घोरैर्भगवन्किमुपेक्षसे ॥ २६

गन्धर्व उवाच ।

एवं तस्यां तदा पार्थ धर्षितायां महामुनिः ।
न चुक्षुभे न धैर्याच्च विचचाल धृतव्रतः ॥ २७

वसिष्ठ उवाच ।

क्षत्रियाणां बलं तेजो ब्राह्मणानां क्षमा बलम् । C. 1. 6676 B. 1. 175. 29 K. 1. 191. 31

---

S (except G4, which om. 22) ins.:

1761* सा तदा ह्रियमाणा च विश्वामित्रबलैर्बलात् ।

22 G4 om. 22. — $22^{ab}$ = (var.) $33^{ab}$. — $^{a}$) Ko. 2. 3 Ñ2 V1 B1 D2 °प्रणुदिता; K1 G3 °प्रमृदिता; K4 Dn3 °प्रभृतिभिः; Ñ1 कशाग्रदंडचुदिता (cf. $33^{ab}$); Ñ3 T1 G2 M °प्रचुदिता; B3 °प्रतुदिता; Da2 °प्रतिहतां; Dn1. n2 D5 °प्रणुदितां; D1 °प्रतुदितां; T2 G1. 5. 6 °प्रहारैश्च. — $^{b}$) K4 Dn3 ताड्यमाना; Ñ2 V1 Dn1. n2 °मानाम्; T2 G5 (corrupt) तास्यमाना (G5 °नाम्). Ñ2 V1 Dn1. n2 G5 इतस्ततः; T1 G2. 3 यत°. — $^{c}$) D2 जृंभायमाणा; D4 M हुंभा°; D5 रंभा°; T1 G2. 3 हुंफा°; Arjp हंवा°; Cd as in text. T2 G1. 5. 6 ह्रियमाणा तथा (G5 ततस्) तेन.

23 $^{a}$) Ś1 K1 °भिमुखं; T2 G2 °भिमता; G3 उद्यम्याभिमता; G4 °म्याथाब्रवीत्. — $^{b}$) Ś1 K1 तस्याभवदुदङ्मुखी; Ko. 2–4 स्थिताभवदुदङ्मुखी; D2 तथौ दुःखादवाङ्मुखी; B5 °स्थौ विनदनोन्मु°. — $^{c}$) T1 G2 सुभृशं (for भृशं च). G4 सं- (for च). Ñ2 V1 B D (except D4. 5) वै (for अपि). G1. 5. 6 °शं संतप्यमा°; M5 °शं सा कड्यमा°. — $^{d}$) D4. 5 तदा (for ततः). — After 23, T1 G2 ins.:

1762* बलानि तेषां निर्धूय छित्वा पाशनिबन्धनम् ।;

while T2 G1. 4–6 ins.:

1763* आश्रमान्नैव गच्छन्ती हुम्भारावैर्ननाद च ।

*N. B.* The sequence from $23^{cd}$ onwards in T1 G2 is $23^{cd}$, 1762*, $25^{cd}$ (om. $25^{ab}$ altogether), 26, 24, 28, $26^{ab}$ (repeated), 1766*, 27, 29, 30 etc.; in G1. 4. 5, $23^{cd}$, 1763*, 25, $26^{ab}$, 1766*, 24, 26 (G4. 5 om. $26^{ab}$, but G1 repeats it), 27 etc.

24 T2 G6 transp. 24 and 25. For sequence of T1 G1. 2. 4. 5 cf. v. l. 23. — Ś1 K1 S om. उवाच. — $^{a}$) K3. 4 T2 G2 वरं (for रवं). — $^{b}$) Ko नदंत्या वै; K1 विरुदंत्याः; T2 G1. 4. 5 निन°; G6 रुदंत्या वै; M3. 5 मां क्रंदंत्या. S मुहुर्मुहुः (for पुनः पुनः). — For B1. 3 D1. 2 see below. — $^{c}$) T2 G1. 5. 6 प्रयासि (for ह्रियसि). Ś1 K1 वत्से (for नन्दि). K2 गृह्यसे मे बलान्नंदि; Ñ1. 2 V1 B5. 6 D (for D1. 2 see below) ह्रियसे त्वं बलाद्भद्रे; M3. 5 बलाद्धि ह्रियसे नंदि. — Ñ1. 2 V1 B5. 6 Da Dn D4. 5 ins. after $24^{c}$; B1. 3 D1. 2 (all om. the first half) subst. for $24^{c}$:

1764* विश्वामित्रेण नन्दिनि । किं कर्तव्यं मया तत्र.

[ For the latter half Ñ1 reads $24^{c}$. ]

After 24, T1 G2 read 28 (cf. v. l. 23, 24).

25 T1 G2 om. $25^{ab}$; T2 G6 transp. 24 and 25; For the sequence of T1 G1. 2. 4. 5 cf. v. l. 23. S om. गन्धर्व उ°; Ś1 K1 om. उवाच. — After गन्धर्व उ°, Ñ1 B5 ins.:

1765* अथैनां नन्दिनीं भूयो विश्वामित्रस्य सैनिकाः ।
सर्वतः समकाल्यन्त कशापाषाणपाणयः ।

— $^{a}$) Ñ1. 2 V1 B D सा भयान्नंदिनी तेषां. — $^{b}$) Ś1 K (except Ko) पुरुषर्षभ. — D1 om. $25^{cd}$. — $^{d}$) K3 B5 Da D4. 5 °गता.

26 T1 G4 om. गौरु°; G3 M om. उवाच. T2 नंदिनी; G1. 5. 6 नंदी; G2 कामधेनुः (for गौरु°). — For the sequence of T1 G1. 2. 4. 5 cf. v. l. 23. — $^{a}$) Ñ2 V1 B1. 3. 6 D कशाग्रदंडा°; B5 कशादंडप्रतिहतां; G6 पाषाणदंडैर्निहतां; Cd as in text. — $^{b}$) K3 रुदंतीं माम्; Ñ2 V1 B6 Dn D1. 5 M3. 5 क्रोशंतीं माम्; D2 क्रंदमानाम्. — G1. 4. 5 ins. after $26^{ab}$: T1 G2, after the repetition of $26^{ab}$:

1766* उपेक्षसे कथं ब्रह्मन्भक्तां पादाब्जसेविनीम् ।

— $^{cd}$) T1 G2 गाधिजेन (G2 गाधेयाति-) बलान्नीतां बलवान्किमु°.

27 For the sequence of T1 G2 cf. v. l. 23. Ś1 K1 S om. उवाच. — $^{a}$) K2 T2 G (except G2. 3) तथा (for तदा). Ñ2 V1 B D (except Da D5) नंदिन्यामेवं (Dn1. n3 D1 °व) क्रंदंत्यां. — $^{b}$) G3 तदा (for महा-). — $^{c}$) G3 M3. 5 स (for the second न). Ñ1. 2 V1 B D तदा धैर्यान् (for न धैर्याच्च). Ko. 3. 4 चुक्षुभे न स वै धैर्यान्; T2 G4–6 न चाक्षुभ्यत धै°. — $^{d}$) Ko. 3. 4 Ñ1. 2 V1 B D T1 M3 न (for वि-). T2 G1. 4–6 नैव कोपं समाददे.

C. 1. 6676 B. 1. 175. 29 K. 1. 191. 31 क्षमा मां भजते तस्माद्गम्यतां यदि रोचते ॥ २८

गौरुवाच ।

किं नु त्यक्तास्मि भगवन्यदेवं मां प्रभाषसे ।
अत्यक्ताहं त्वया ब्रह्मन्न शक्या नयितुं बलात् ॥२९

वसिष्ठ उवाच ।

न त्वां त्यजामि कल्याणि स्थीयतां यदि शक्यते ।
दृढेन दाम्ना बद्ध्वैष वत्सस्ते ह्रियते बलात् ॥ ३०

गन्धर्व उवाच ।

स्थीयतामिति तच्छ्रुत्वा वसिष्ठस्य पयस्विनी ।
ऊर्ध्वाञ्चितशिरोग्रीवा प्रबभौ घोरदर्शना ॥ ३१
क्रोधरक्तेक्षणा सा गौर्हम्भारवघनस्वना ।
विश्वामित्रस्य तत्सैन्यं व्यद्रावयत सर्वशः ॥ ३२
कशाग्रदण्डाभिहता काल्यमाना ततस्ततः ।
क्रोधदीप्तेक्षणा क्रोधं भूय एव समादधे ॥ ३३
आदित्य इव मध्याह्ने क्रोधदीप्तवपुर्बभौ ।
अङ्गारवर्षं मुञ्चन्ती मुहुर्वालधितो महत् ॥ ३४
असृजत्पह्लवान्पुच्छाच्छकृतः शबराञ्शकान् ।
मूत्रतश्चासृजच्चापि यवनान्क्रोधमूर्च्छिता ॥ ३५
पुण्ड्रान्किरातान्द्रमिडान्सिंहलान्बर्बरांस्तथा ।
तथैव दरदान्म्लेच्छान्फेनतः सा ससर्ज ह ॥ ३६

28 Ś1 K1 S om. उवाच (T1 om. the ref.). T1 G2 read 28 after 24 (cf. v. l. 23). — a) G6 वीर्यं (for तेजो). — b) Ñ1.3 Dn3 T1 G2.3 M transp. क्षमा and बलं. — c) B D2 मे; M (except M3) मा (for मां). B D2 वव्रुणे (for भजते). Ñ1.2 V1 Dn D2.5 T2 G3–6 यस्माद्. — After 28, T1 G2 *repeat* $26^{ab}$, which is followed by 1766* (cf. v. l. 26).

29 T1 G2 read 29 after 27 (cf. v. l. 23). — K1 T1 G1 M om. उवाच; G3 om. the ref. Ñ2 V1 B5.6 D (except D2.5) नंदिन्युवाच; T2 G4–6 नंदिनी; G2 कामधेनुः (for गौरु°). — b) Ś1 K1.3.4 सं-; Ñ2 V1 B6 Da Dn D1 त्वं (for मां). B1.3.5 D2.4 त्वया ब्रह्मर्षिसत्तम. — c) B5 अमुक्ता°; T2 G5 नात्यक्ता°; G2.4.6 न त्यक्ता°. — d) Ś1 K न शक्या नेतुमंजसा (K0 °मोजसा); Ñ2 V1 B D नेतुं शक्या न वै बलात्; T1 G2 नेतुं शक्या बलान्न हि; T2 G1.4–6 शक्या नेतुं बलादितः.

30 Ś1 K1.3 S om. उवाच. — b) G1 रोच° (for शक्य°). — c) K0 D2 T1 G2 एव (for एष). — d) Ś1 K1 अपि (for ते). Ś1 आह्रियते; M नीयते. — After 30, S ins.:

1767* येन केनाप्युपायेन त्वया वत्सो निवार्यताम् ।

31 Ś1 K1 S om. उवाच (G3 M3.5 om. the ref.). — b) Cf. $15^{b}$. D4 T2 G5 M3 (*inf. lin.* as in text) यशस्विनी. — c) D5 ऊर्ध्वीकृत°; Cd as in text. — d) T1 G2 सा बभौ; G1.4.5 प्रभावाच्. Ñ1.3 S चारु°; Ñ2 V1 B D रौद्र°.

32 a) D5 क्रोधदीप्ते°. — b) N3 Da °राव°; B6 हंबा°; D4 हुंभा°; T1 °स्वनैः; T2 G3–6 हुंफारवघनैः स्वनैः; G1 हुंभारावघनैः स्वनैः; G2 हुंफारवघनस्वनैः; M हुंभाराव(M3.5 °रव)घनस्वनैः. — d) K4 विद्रावयति; D4 द्रावयामास; T1 G2.3 प्राद्रा°; G5 विद्रा°; M6–8 प्रद्रा°.

33 $33^{ab}$=(var.) $22^{ab}$. — a) Ś1 K1.2 कषा(K2 °शा)दंडप्रतुदिता; K0.3.4 कशादंड(K4 °डैः)प्रव्यथिता; Ñ1 अग्रदंडप्रणिहिता; B1.6 कषाग्र° (B1m पाषाण°); B5 कशादंडप्रतिहता. — c) Cf. $32^{a}$. Ñ1.2 V1 B D T1 G2.3 M क्रोधरक्तेक्षणा (D2 °णात्). Dn3 D4.5 सा गौः (for क्रोधं). — d) Ś1 पुनरेव; Dn3 D4.5 क्रोधं भूयः (for भूय एव). K0 समाययौ; Ñ1.2 V1 B5.6 Dn1.n2 D1.4 T2 G1.2.5 °ददे.

34 b) K0.3.4 दीप्तरश्मिवपुर्यथा. — d) T1 वालव्यजनवीजनैः; T2 G4–6 मुहुर्वातान् (G4 °वर्षं; G6 °वांतं) मुखाद्वमत्; G2 बालव्यसनजीविनैः; G3 मुहुर्ज्वालाधिकं महत्; M मुहु(M5 बहु)र्वालधिनो (M3 °ना) महत्. — After 34, Ś1 K1 ins. an additional colophon.

35 Before 35, Ś1 K1 ins. गंधर्वः (cf. v. l. 34). — a) D5 स बहून्; T1 M पल्लवान्; T2 G पप्लवान्. G1 म्लेच्छान् (for पुच्छात्). — b) Ñ V1 B D S प्रस्रवात् (for शकृतः); see below. Ñ2 V1 B D द्राविडान् (for शबरान्). — After $35^{ab}$, Ñ2 V1 Dn S ins.:

1768* योनिदेशाच्च यवनाञ्छकृद्देशाच्छकांस्तथा ।
[ Ñ2 V1 Dn °ञ्छकृतः शबरान्बहून्. ]

— c) K (except K1) M सासृज°; G3 ससृजुश्. Ñ1 म्लेच्छान्; Ñ2 V1 B3 कांश्चित्; B1.5.6 D कांचीन् (Dn1 कांचिं; Dn2 कांचीत्; Dn3 कांश्चीत्) (for चापि). — After $35^{abc}$, K4 ins.:

1769* बर्बरांश्चैव पार्श्वतः ।
प्राणतः प्रासृजच्चेयं.

— d) T2 G1.3–6 M नंदिनी (for यवनान्); cf. 1768*. K0.2 Ñ1 °मूर्च्छितान्. Ñ2 V1 B D शबरां(B5 शरवां-; Dn2 D4.5 शरभां)श्चैव पार्श्वतः; T1 G2 म्लेच्छानांध्रसिंलिंध्रकान्.

36 a) K4 मुंद्रान्; Ñ1.2 V1 B D पौंड्रान्; G3 आंध्रान्;

तैर्विसृष्टैर्महत्सैन्यं नानाम्लेच्छगणैस्तदा ।
नानावरणसंछन्नैर्नानायुधधरैस्तथा ।
अवाकीर्यत संरब्धैर्विश्वामित्रस्य पश्यतः ॥ ३७
एकैकश्च तदा योधः पञ्चभिः सप्तभिर्वृतः ।
अस्त्रवर्षेण महता काल्यमानं बलं ततः ।
प्रभग्नं सर्वतस्त्रस्तं विश्वामित्रस्य पश्यतः ॥ ३८
न च प्राणैर्वियुज्यन्त केचित्ते सैनिकास्तदा ।
विश्वामित्रस्य संक्रुद्धैर्वासिष्ठैर्भरतर्षभ ॥ ३९
विश्वामित्रस्य सैन्यं तु काल्यमानं त्रियोजनम् ।
क्रोशमानं भयोद्विग्नं त्रातारं नाध्यगच्छत ॥ ४०
दृष्ट्वा तन्महदाश्चर्यं ब्रह्मतेजोभवं तदा ।
विश्वामित्रः क्षत्रभावान्निर्विण्णो वाक्यमब्रवीत् ॥ ४१
धिग्बलं क्षत्रियबलं ब्रह्मतेजोबलं बलम् ।
बलाबलं विनिश्चित्य तप एव परं बलम् ॥ ४२
स राज्यं स्फीतमुत्सृज्य तां च दीप्तां नृपश्रियम् ।
भोगांश्च पृष्ठतः कृत्वा तपस्येव मनो दधे ॥ ४३
स गत्वा तपसा सिद्धिं लोकान्विष्टभ्य तेजसा ।
तताप सर्वान्दीप्तौजा ब्राह्मणत्वमवाप च ।
अपिबच्च सुतं सोममिन्द्रेण सह कौशिकः ॥ ४४ C. 1. 6695 B. 1. 175. 48 K. 1. 191. 60

इति श्रीमहाभारते आदिपर्वणि पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥

---

K (except K1) Ñ1 G3 द्रविडान्; Ñ2 V1 B D यवनान्. — $^{b}$) K4 G3 transp. सिंह° and बर्ब°. T1 G2 तुरुष्कान् (for सिंह°). M5 मालवान्. Ñ2 V1 B3 Dn1 D1.2 खसान्; B1.5.6 Da Dn2.n3 D4.5 खशान्; G3 तदा. — After 36$^{ab}$, Ñ2 V1 B D ins.:

1770* चिबुकांश्च पुलिन्दांश्च चीनान्हूणान्सकेरलान् ।

— $^{c}$) Ñ1 शबरान्; Ñ3 T2 G1.3-5 M6-8 दर्दुरान्; G6 बर्बरान्; M3 दर्दुरान्; M5 बर्बुरान् (for दरदान्). Ñ2 V1 B D ससर्ज फेनतः (B1 Da शकृतः) सा गौः; T1 G2 पारसीकांश्च सिंहांश्च. — $^{d}$) K4 योनि°; G3 पार्श्व°; M5 क्षीर°; M6-8 फेनकान् (for फेन°). Ś1 संससर्ज सा. Ñ2 V1 B D म्लेच्छान्बहुविधानपि.

37 $^{a}$) K3 B1.6 Dn3 D1.2 G3 महासैन्यं; Ñ V1 B3 Dn1.n2 D4.5 महासैन्यैर्. — $^{b}$) Ś1 K0 B1.5 D4.5 T G M5 तथा (for तदा). — G5 om. 37$^{cd}$. — $^{c}$) B1 T2 G1.3.4 नानाभरण°. — $^{d}$) T2 G1.4 °युधशतैस्; G6 °युधशौरैस्. T1 G2 अपि; G6 तदा. — $^{e}$) Ś1 S (except T1 G4) अवकी°. D5 तत्सैन्यं; T1 G2.3 M संनद्धैर्. — $^{f}$)=38$^{f}$. D5 संरब्धैर्म्लेच्छकोटिभिः. — After 37, T1 ins. 1771* (cf. v. l. 38).

38 D1 om. 38; T1 reads 38 after line 17 of a passage given in App. I (No. 97). — $^{a}$) K4 एकैकः स; S °कैकशस्. T2 G1.4-6 तस्य; G3 तथा (for तदा). Da योधैः; D5 S योधाः. — $^{b}$) D5 S वृताः. — $^{c}$) K (except K1) Ñ1.3 T2 G1.4.6 M शस्त्र°; G3 शर°. T1 G2 महता शरवर्षेण. — $^{d}$) Ñ1 मध्यमानं; Ñ2.3 V1 B D (D1 om.) T2 G1.4-6 वध्य°; T1 G2.3 M हन्य°. K2 हि तत्; Ñ2.3 V1 B D (D1 om.) तदा. — $^{e}$) K2 Ñ1 G3 M सर्वशस्. Ś1 तत्र (for त्रस्तं). K1 °ग्नं सर्वशस्तैस्तु; Ñ3 °ग्नं सर्वशस्त्रं हि; T1 G2 °ग्नं सर्वशस्त्रास्त्रं; T2 G1.5 °ग्नदर्पं संत्रस्तं; G4.6 °ग्नं दर्पसत्रस्तं. — S ins. after 38 (T1, after 37):

1771* तस्य तच्चतुरङ्गं वै बलं परमदुःसहम् ।
प्रभग्नं सर्वतो घोरं पयस्विन्या विवर्जितम् ।

39 $^{a}$) T1 G1.4.5 स्म (for च). K1.2 Ñ3 G2.4 M3.5 व्ययुज्यंत; K3 Ñ2 V1 B D °ज्यंते; K4 व्यमुंचंत; Ñ3 विमुच्यंत. — $^{b}$) K1 ततः (for तदा). Ñ1 B3 Da D1.2.4 केचित्तत्रापि सैनिकाः; Ñ2 V1 B1.3.5 Dn D5 °चित्तत्रास्य सैनिकाः; Ñ3 किंचित्ते सैनिकं तदा; S तदा (G3 तत्र) केचन सैनिकाः. — D1 om. 39$^{c}$-41$^{b}$; K3 om. 39$^{cd}$. — $^{c}$) G4 वैश्वामित्रैश्च. Ś1 K (K3 om.) Ñ1.3 G3 संक्रुद्धा. — $^{d}$) Ś1 K1 वासिष्ठी; K0 Ñ1.3 G3 वासिष्ठा; K2.4 वसिष्ठा; G2 वासिष्ठो. G4 चैव भारत (for भर°). — After 39, Ś1 K1.4 Ñ1.2 V1 B (except B1) Dn D4 (om. posterior half).5 ins.:

1772* सा गौस्तत्सकलं सैन्यं कालयामास दूरतः ।

40 D1 om. 40 (cf. v. l. 39); D4 om. 40$^{a}$. — $^{a}$) Ñ2.3 V1 B D (D1.4 om.) तत्सैन्यं (for सैन्यं तु). — $^{cd}$) M5 °नं भृशोद्विग्नं त्रा° नाधिगच्छति. — A passage given in App. I (No. 97) is ins. in D4 (marg. *sec. m.*) T2 G (except G3) after 40, in T1 after 41$^{ab}$. — In T1 G2 this passage is followed by a *repetition* of 41$^{ab}$.

41 D1 om. 41$^{ab}$ (cf. v. l. 39). — $^{a}$) G6 transp. दृष्ट्वा and तत्. M6-8 तु (for तन्). — $^{b}$) K0.4 T1 G2.3 M °तेजोद्भवं बलं (K0.4 तदा); T2 G1.4-6 °तेजोबलं बलं (=42$^{b}$). — After 41$^{ab}$, T1 ins. a passage given in App. I (No. 97). — $^{c}$) Ś1 क्षत्रबलान्.

# १६६

C. 1. 6696
B. 1. 176. 1
K. 1. 192. 6

गन्धर्व उवाच ।
कल्माषपाद इत्यस्मिँल्लोके राजा बभूव ह ।
इक्ष्वाकुवंशजः पार्थ तेजसासदृशो भुवि ॥ १
स कदाचिद्वनं राजा मृगयां निर्ययौ पुरात् ।
मृगान्विध्यन्वराहांश्च चचार रिपुमर्दनः ॥ २
स तु राजा महात्मानं वासिष्ठमृषिसत्तमम् ।
तृषार्तश्च क्षुधार्तश्च एकायनगतः पथि ॥ ३
अपश्यदजितः संख्ये मुनिं प्रतिमुखागतम् ।

---

42 [b]) Ś1 K3 Ñ1 °तेजोद्भवं बलं (cf. v. l. 41[b]); Ko.2.3 m.4 °तेजो महद्बलं; Ñ3 °तेजो वरं ब°. — [c]) Ko.3.4 D2 S बलाबले. — [d]) Ñ1 G1 M6–8 transp. परं and बलं. D5 महत् (for परं).

43 [a]) Ś1 K1 दीप्तं; G2 स्थितं (for स्फीतं). G3 स्वराज्यस्थितमु°. — [b]) B D5 दृप्तां (for दीप्तां). — [d]) Ñ1 D1 S (except M3.5) तप एव. T1 G1.2 समा- (for मनो). T2 G3–6 ददे.

44 [a]) Ś1 transp. स and गत्वा. Ñ1 स लब्ध्वा तपसः सि°. — [c]) T G M6–8 लोकांश्च (for दीप्तौजा). M3 तताप सर्वलोकांश्च; M5 °प दीप्तवीर्यौजा. — [d]) G2 M6–8 ह; M5 सः (for च). Ñ2 V1 B5.6 D (except D5) °त्वमवाप्तवान्. — [e]) K4 Ñ2 V1 B D ततः; T1 G2–4 हुतं; G1 स्तुतं; Cd सुतं (as in text). Ś1 °बत्सततं सो°; K1 पिबश्च सततं सो°. — After 44, S ins.:

1773* एवंवीर्यस्तु राजर्षिर्विप्रर्षिः संबभूव ह ।

Colophon om. in T2 G3–6. — *Major parvan:* G1.2 M संभव° (for आदि°). — *Sub-parvan:* Ñ1.2 V1 चैत्ररथ, followed by वासिष्ठ; T1 संभव. Ś1 K1–3 Ñ3 B Da Dn1.n2 D1.2.4.5 (all om. the sub-parvan name) mention only वासिष्ठ (K1 कौशिक; M वसिष्ठोपाख्यान). — *Adhy. name:* Ko.4 वसिष्ठ(K4 om. it)धेनुहरणं. — *Adhy. no.* (figures, words or both): Dn3 174; D4m 176; T1 173; G1 126; G2 124; M 125. — *S'loka no.:* Dn1.n2 47; M3 52. — *Aggregate s'loka no.:* Dn2 6666.

## 166

Before 1, D4 (marg. *sec. m.*) S (G5 om. lines 3–6; D4 M om. lines 7) ins.:

1774* अर्जुनः ।
ऋष्योस्तु यत्कृते वैरं विश्वामित्रवसिष्ठयोः ।
बभूव गन्धर्वपते ब्रूहि तत्सर्वमेव च ।
माहात्म्यं च वसिष्ठस्य ब्राह्मण्यं ब्रह्मतेजसः ।
विश्वामित्रस्य च तथा क्षत्रियस्य महात्मनः ।
न शृण्वानस्त्वहं तृप्तिमुपगच्छामि खेचर । [5]
आख्याहि गन्धर्वपते विचित्राणीह भाषसे ।
माहात्म्यं च वसिष्ठस्य विश्वामित्रस्य भाषसे ।

[ D4 अर्जुन उ°. — (L. 2) M6–8 शंस (for ब्रूहि). G2 M मे (for च). — (L. 4) T1 G2 ब्राह्मण्यं प्राप्तमेव च; G1.4 M3.5 क्षत्रस्य च महा°. — (L. 6) T1 G2 सत्कथासारमेव च; T2 G1.3.4.6 शंस (T2 G6 ब्रूहि) तत्सर्वमेव मे (for विचित्रा° etc.). — (L. 7) T1 G2 विचित्राणि च; G3.6 विचित्राणीह (for विश्वा°). ]

1 Ś1 K1 S om. उवाच. — After गन्धर्वः (resp. its v. l.), D4 (marg. *sec. m.*) S *repeat* (with variation) 1. 165. 2 (v. l.: पुण्यमुत्तमं for परिचक्षते, and विश्रुतं वि- for यथावत्तन्). — [a]) Ñ2 V1 B D (except D5) एवं (for अस्मिन्). — [c]) S इक्ष्वाकूणां कुले जातः. — [d]) Ś1 K1 तेजसाप्रतिमो. — After 1, T1 G3 ins.:

1775* नास्ति तत्र महाराज वैश्वानरसमद्युतेः ।

2 [a]) K1 T1 G1.2 M वने. T1 G1.2 M रम्ये (for राजा). — [b]) Ś1 K1 Ñ1 पुरा (for पुरात्). S मृगयामचरद्बली. — [c])=1. 165. 5[c]. T1 G1.2 M निघ्नन् (for विध्यन्). — [d]) Ś1 K1 °मर्दन; S रिपुसूदनः. — After 2, K3.4 Ñ1.2 V1 B D ins.:

1776* तस्मिन्वने महाघोरे खड्गांश्च बहुशोऽहनत् ।
हत्वा च सुचिरं श्रान्तो राजा निववृते ततः ।

K3.4 Ñ1.2 V1 B D cont.: Ś1 Ko.1 Ñ3 ins. after 2:

1777* अकामयत्तं याज्यार्थे विश्वामित्रः प्रतापवान् ।

[ Ś1 Ko.1.3.4 °यत. Cd cites याज्यार्थे. Ś1 Ko.1.4 °मित्रस्य पश्यतः. ]

3 G3 om. 3[ab]. — [a]) Ś1 K (except K3) च (for तु). — [b]) D1 मुनि° (for ऋषि°). — [c]) D5 transp. तृषा° and क्षुधा°. Ñ1 Da D1.2.4 तृष्णार्तश्च; S स तृष्णा(M3.5 °षा)र्तः. — [d]) Ś1 K अप्येकायन° (K3 °काकी स); T2 G2.5 एकयान°.

4 [c]) Here and below N spells the name (mostly) as शक्ति-. Here, only Ko.4 B1.6 Da2 शक्तिं; but cf.

शक्तिं नाम महाभागं वसिष्ठकुलनन्दनम् ।
ज्येष्ठं पुत्रशतात्पुत्रं वसिष्ठस्य महात्मनः ॥ ४
अपगच्छ पथोऽस्माकमित्येवं पार्थिवोऽब्रवीत् ।
तथा ऋषिरुवाचैनं सान्त्वयञ्श्लक्ष्णया गिरा ॥ ५
ऋषिस्तु नापचक्राम तस्मिन्धर्मपथे स्थितः ।
नापि राजा मुनेर्मानात्क्रोधाच्चापि जगाम ह ॥ ६
अमुञ्चन्तं तु पन्थानं तमृषिं नृपसत्तमः ।
जघान कशया मोहात्तदा राक्षसवन्मुनिम् ॥ ७
कशाप्रहाराभिहतस्ततः स मुनिसत्तमः ।
तं शशाप नृपश्रेष्ठं वासिष्ठः क्रोधमूर्च्छितः ॥ ८
हंसि राक्षसवद्यस्माद्राजापसद तापसम् ।
तस्मात्त्वमद्य प्रभृति पुरुषादो भविष्यसि ॥ ९
मनुष्यपिशिते सक्तश्चरिष्यसि महीमिमाम् ।
गच्छ राजाधमेत्युक्तः शक्तिना वीर्यशक्तिना ॥ १०
ततो याज्यनिमित्तं तु विश्वामित्रवसिष्ठयोः ।
वैरमासीत्तदा तं तु विश्वामित्रोऽन्वपद्यत ॥ ११
तयोर्विवदतोरेवं समीपमुपचक्रमे ।
ऋषिरुग्रतपाः पार्थ विश्वामित्रः प्रतापवान् ॥ १२
ततः स बुबुधे पश्चात्तमृषिं नृपसत्तमः ।
ऋषेः पुत्रं वसिष्ठस्य वसिष्ठमिव तेजसा ॥ १३
अन्तर्धाय तदात्मानं विश्वामित्रोऽपि भारत ।
तावुभावुपचक्राम चिकीर्षन्नात्मनः प्रियम् ॥ १४
स तु शप्तस्तदा तेन शक्तिना वै नृपोत्तमः ।
जगाम शरणं शक्तिं प्रसादयितुमर्हयन् ॥ १५ C. 1. 6714 B. 1. 176. 19 K. 1. 192. 25

---

other ref. below. $K_2$ शकुणं सुमहा°. — $^{d}$) $\tilde{N}_2$ $V_1$ B Da Dn $D_{1.2.4}$ °कुलवर्धनं. — $^{ef}$) $\tilde{N}_2$ $V_1$ B D transp. पुत्रश° and पुत्रं. $T_1$ $G_2$ °शतानां च वासिष्ठानां °त्मनां.

5 $^{b}$) $M_{6-8}$ एनं (for एवं). — $^{c}$) $Ś_1$ K $\tilde{N}_{1.3}$ तथैवर्षिर्; S स चाप्यृषिर्. K (except $K_1$) B (except $B_6$) $D_2$ T $G_{2-5}$ इदं (for एनं). — After 5, $K_{0.3.4}$ $\tilde{N}_{1.2}$ $V_1$ D (except Da) S ins.:

1778* मम पन्था महाराज धर्म एष सनातनः ।
राज्ञा सर्वेषु धर्मेषु देयः पन्था द्विजातये ।

[ Before line 1, S ins. शक्तिः. — (L. 2) $K_{0.3.4}$ S धर्मेण (for सर्वेषु). $K_0$ संकल्पाद्; $K_{3.4}$ संकल्प्य; $T_1$ $G_{2.5}$ संदिष्टो; $T_2$ $G_{1.3.6}$ M संकल्पो; $G_4$ सदृष्टो (for धर्मेषु). ]
$K_4$ $\tilde{N}_{1.2}$ $V_1$ Dn $D_{1.2.4.5}$ cont.: B Da ins. after 5:

1779* एवं परस्परं तौ तु पथोऽर्थं वाक्यमूचतुः ।
अपसर्पापसर्पेति वागुत्तरमकुर्वताम् ।

6 Before 6, S ins. गंधर्वः. — $K_1$ lacuna for $6^{a}$. — $^{a}$) $D_5$ शक्तिस्तु; $T_1$ $G_2$ स ऋषिर्. $Ś_1$ यत्तु शक्तिर्महाभागः (marg. *sec. m.* न चोवाच मुनिः किंचित्). — $^{b}$) $K_4$ तीर्थपथे; $\tilde{N}_1$ धर्मपथि; $\tilde{N}_3$ °र्स्ये पथि; $G_3$ ब्रह्मपथे; Cd as in text. — $^{c}$) S om. न. $G_4$ तु तत् (for मुनेः). $B_5$ $D_4$ वाक्यात्; T G (except $G_{3.5}$) मार्गात्; Cd मानात् (as in text). — $^{d}$) $B_3$ कोपाच्च; $B_5$ $D_{4.5}$ क्रोधं च; S क्रोधाच्च ($G_1$ °धेन). $K_2$ $\tilde{N}_{1.3}$ $B_5$ (m as in text) $Da_1$ S अप-; $\tilde{N}_2$ $V_1$ $B_{1.6}$ $Da_2$ $Dn_1$.$n_3$ $D_1$ अथ (for अपि).

7 $^{b}$) S (except $M_8$) ऋषिं नृपतिसत्तमः. — $G_2$ (hapl.) om. $7^{c}$–$13^{b}$. — $^{c}$) Here and below $Ś_1$ $K_1$ Da कषा- for कशा-. — $^{d}$) S ($G_2$ om.) नृपो (for तदा).

8 $G_2$ om. 8 (cf. v. l. 7). — $^{b}$) S ($G_2$ om.) राजानं (for ततः स). $Ś_1$ $K_{1-3}$ $\tilde{N}_{1.3}$ $D_5$ मुनिपुंगवः; S ($G_2$ om.) ऋषिस°. — $^{c}$) $K_0$ transp. तं and शशाप. $T_1$ रुषाविष्टो (for नृप°).

9 $G_2$ om. 9 (cf. v. l. 7). Before 9, T $G_{1.3-6}$ $M_{6-8}$ ins. शक्तिः. — $^{a}$) $T_2$ $G_{1.5.6}$ यन्मां (for यस्माद्). $G_4$ हंसि राजन्स्वयं यन्मां. — $^{b}$) $K_1$ S °पशद्.

10 $G_2$ om. 10 (cf. v. l. 7). — $^{a}$) $Ś_1$ $K_1$ $G_3$ मानुष्य°; $D_{1.5}$ $T_1$ °विशिता-. $Ś_1$ $K_1$ मत्तः (for सक्तः). — $^{d}$) $Ś_1$ K $B_1$ Da शक्रिणा.

11 $G_2$ om. 11 (cf. v. l. 7). — $^{a}$) T $G_{1.4.5}$ तत्र ($T_1$ यत्र) मार्ग°; $G_{3.6}$ $M_{6-8}$ तत्र राज्य°. Cd cites याज्यः. — $^{b}$) T $G_{1.4.5}$ भूपवासिष्ठयोस्तदा ($T_1$ °योर्यदा). — $^{c}$) $T_2$ $G_{4-6}$ यदा. $K_{0.4}$ $D_4$ तत्र; $K_3$ $G_3$ तत्तु. — $^{d}$) S ($G_2$ om.) °त्रोन्वविंदत ($M_{3.5}$ °त्रोभ्यपद्यत). Cd cites अनुपद्यत.

12 $G_2$ om. 12 (cf. v. l. 7). — $^{a}$) T G ($G_2$ om.) $M_5$ एव (for एवं). — $^{c}$) $Ś_1$ (*sup. lin.* as in text) °रात्ततपाः; $\tilde{N}_1$ °रुग्रश्रवाः.

13 $G_2$ om. $13^{ab}$ (cf. v. l. 7). — $^{b}$) $Ś_1$ $K_1$ $G_5$ $M_{6-8}$ °सत्तम. — $^{c}$) $G_{1.3}$ ऋषिपुत्रं. $T_1$ $G_2$ transp. ऋषेः पुत्रं and वसि°. — $^{d}$) $Ś_1$ K (except $K_2$) °ष्ठसमतेजसं.

14 $^{a}$) $K_{0.4}$ तमात्मा°; $K_2$ $\tilde{N}_2$ $V_1$ B (except $B_6$) D (except $D_2$) ततोत्मा°; $G_3$ तथात्मा°. — $^{b}$) $B_5$ (m as in text) हि; S तु (for अपि). — $^{c}$) $\tilde{N}_2$ $V_1$ $B_5$ $D_{4.5}$ अति-; $D_1$ अपि; $G_3$ अभि-; $G_{4.6}$ अप- (for उप-). — $^{d}$) $D_4$ $G_6$ चिकीर्षुर्.

15 $^{a}$) $\tilde{N}_3$ $M_{6-8}$ तथा (for तदा). — $^{b}$) $Ś_1$ K B

C. 1. 6715
B. 1. 176. 20
K. 1. 192. 26

तस्य भावं विदित्वा स नृपतेः कुरुनन्दन ।
विश्वामित्रस्ततो रक्ष आदिदेश नृपं प्रति ॥ १६
स शापात्तस्य विप्रर्षेर्विश्वामित्रस्य चाज्ञया ।
राक्षसः किंकरो नाम विवेश नृपतिं तदा ॥ १७
रक्षसा तु गृहीतं तं विदित्वा स मुनिस्तदा ।
विश्वामित्रोऽप्यपक्रामत्तस्माद्देशादरिंदम ॥ १८
ततः स नृपतिर्विद्वान्रक्षन्नात्मानमात्मना ।
बलवत्पीड्यमानोऽपि रक्षसान्तर्गतेन ह ॥ १९
ददर्श तं द्विजः कश्चिद्राजानं प्रस्थितं पुनः ।
ययाचे क्षुधितश्चैनं समांसं भोजनं तदा ॥ २०
तमुवाचाथ राजर्षिर्द्विजं मित्रसहस्तदा ।
आस्व ब्रह्मंस्त्वमत्रैव मुहूर्तमिति सान्त्वयन् ॥ २१
निवृत्तः प्रतिदास्यामि भोजनं ते यथेप्सितम् ।
इत्युक्त्वा प्रययौ राजा तस्थौ च द्विजसत्तमः ॥ २२
अन्तर्गतं तु तद्राज्ञस्तदा ब्राह्मणभाषितम् ।
सोऽन्तःपुरं प्रविश्याथ संविवेश नराधिपः ॥ २३
ततोऽर्धरात्र उत्थाय सूदमानाय्य सत्वरम् ।
उवाच राजा संस्मृत्य ब्राह्मणस्य प्रतिश्रुतम् ॥ २४
गच्छामुष्मिन्नसौ देशे ब्राह्मणो मां प्रतीक्षते ।
अन्नार्थी त्वं तमन्नेन समांसेनोपपादय ॥ २५

---

(except B8) Da Dn1 D1 शक्त्रिणा. T G M6-8 अथ (for वै). M3.5 °ना नृपसत्तम. — After $15^{ab}$, K4 ins.:

1780* तस्थौ तत्र च राजा तु सविषादो बभूव ह ।

— c) K3.4 B Da2 D1 शाक्ति॰. S राजा (for शाक्ति॰). — After 15, K4 D5 ins.:

1781* शापान्तो द्वादशे वर्षे तव राजन्भविष्यति ।
उक्तस्तु शक्त्रिणा राजा स तु तत्रैव संस्थितः ।

[ D5 शापांतो तव राजर्षे द्वादशाब्दे भवि°, and ययौ स शक्तेरनयात्स तु तत्रै°. ]

16 a) Ś1 K (except K2) तं; Ñ1.3 G1 M तु (M5 च) (for स). — b) K2 Ñ2 V1 B (except B1) D (except D5) कुरुसत्तम. — c) Ś1 K (except K2) तदा (for ततो). — d) Ś1 K1 संदि°.

17 a) K2 Ñ2 V1 B D (except D5) शापात्त(K2 °पांत)स्य तु; Ñ3 स शापं त°. Ś1 K1 विप्रस्य; Dn3 T1 G2 राजर्षेर्. — G1 om. $17^{c}$–$18^{b}$. — d) K0.3.4 ततः (for तदा).

18 G1 om. $18^{ab}$ (cf. v. l. 17). — a) K2 Ñ2 V1 B6 Da Dn D1 transp. तु and तं. Ñ1 रक्षसांतर्गृ°; T1 G2 राक्षसेन गृ°. K3.4 D4.5 तु (for तं). — b) Ñ3 ऋषिः (for मुनिः). Ñ1.3 ततः (for तदा). K2 Ñ2 V1 B D °त्वा मुनिसत्तमः. — c) Ś1 K0.1.3 Ñ1.3 D2.5 M3.5 °त्रोपचक्राम; K2 Ñ2 V1 B Da Dn1.n2 G1-3.5 °त्रोप्यपाक्रा°; K4 °त्रोपि चक्राम; D1 G6 °त्रोप्युपक्रा°.

19 a) K2.3 Ñ2 V1 B D तेन (for विद्वान्). — b) Ś1 K1 रक्षंतात्मा°; K0 रक्षत्यात्मा°; K2.3 Ñ2 V1 B D रक्षसांतर्गतेन वै; K4 Ñ1.3 रक्षसात्मा°. — c) Ś1 बलवान्; K4 बलात्सं°. K2.3 Ñ2 V1 B D पीडितः पार्थ. — d) Ś1 K0.1.4 च (for ह). K2.3 Ñ2 V1 B D नान्वबुध्यत किंचन.

20 a) Ñ2 V1 B6 Da Dn D1 अथ; T2 G3.5 तत् (for तं). K2.3 B1.3.5 D2.4.5 अथ तं ब्राह्मणः क°. — b) Ś1 तदा; Ñ2.3 V1 B6 Da Dn D1 वनं (D1 °ने); M5 पथि (for पुनः). K2.3 B1.3.5 D4.5 दृष्ट्वा पार्थिवसत्तमं; D2 दृष्ट्वा पार्थं वसन्वने. — c) Ñ2 V1 B D अयाचत क्षुधापन्नः.

21 a) K (except K2) Ñ1.3 D5 T1 G1.2 M स (for अथ). — Before $21^{cd}$, M6-8 ins. राजा. — c) Ś1 K (except K1) Ñ2.3 V1 B6 Da1 Dn D1.2.4 T G M3.5 आस्व; Ñ1 आस्तां; D5 M6-8 आस्थ; Cd आसु (sic). G2 अद्य (for अत्र). — d) Ś1 S (except G3.5 M3) इव (for इति). Ś1 K (except K2) चिंतयन् (for सान्त्व°). Ñ2 V1 B6 D (except D2.4.5) °तं प्रतिपालयन्.

22 a) S विनिवृत्तः प्रदास्या°. — c) K0 स (for प्र-). — d) K0.3.4 D5 S (except G2.3.6) स; K1 Ñ1.3 तु (for च).

23 a) T1 G2 M6-8 °गतं ततो राजा; T2 G4.5 M3.5 °गतस्ततो राजा; G1.6 अंतःपुरं गतो राजा; G3 अंततस्तु तदा राजा. — b) T1 G1.2 M ततो (for तदा). K0.3.4 °भोजनं. — c) K3 om. सः. — d) S न सस्मार (for संवि°). — For 23, K2 Ñ2 V1 B D subst.:

1782* ततो राजा परिक्रम्य यथाकामं यथासुखम् ।
निवृत्तोऽन्तःपुरं पार्थ प्रविवेश महामनाः ।

The st. (23) is preserved intact only in the Kās'mīrī (S'āradā) version!

24 b) T1 G2 आहूय (for आनाय्य). K2 Ñ3 S सत्वरः (T2 as in text; G4-6 सत्तमः). — c) G6 °च वचनं स्मृ°. — d) Ñ1.3 प्रतिश्रवं; B5.6 प्रतिष्ठितं; D2 परिश्रुतं; B6m Cd as in text.

25 Before 25, S ins. राजा. — a) K2 गच्छ यस्मिन्; B5 अस्मिन्गच्छ; D2 G2 °च्छ तस्मिन्; D4 °च्छायुष्मन्; T1 तच्च तस्मिन्. K2 Ñ2 V1 B D (except D5) G4.5 वनोद्देशे.

एवमुक्तस्तदा सूदः सोऽन्नासाद्यामिषं क्वचित् ।
निवेदयामास तदा तस्मै राज्ञे व्यथान्वितः ॥ २६
राजा तु रक्षसाविष्टः सूदमाह गतव्यथः ।
अप्येनं नरमांसेन भोजयेति पुनः पुनः ॥ २७
तथेत्युक्त्वा ततः सूदः संस्थानं वध्यघातिनाम् ।
गत्वा जहार त्वरितो नरमांसमपेतभीः ॥ २८
स तत्संस्कृत्य विधिवदन्नोपहितमाशु वै ।
तस्मै प्रादाद्ब्राह्मणाय क्षुधिताय तपस्विने ॥ २९
स सिद्धचक्षुषा दृष्ट्वा तदन्नं द्विजसत्तमः ।
अभोज्यमिदमित्याह क्रोधपर्याकुलेक्षणः ॥ ३०
यस्मादभोज्यमन्नं मे ददाति स नराधिपः ।
तस्मात्तस्यैव मूढस्य भविष्यत्यत्र लोलुपा ॥ ३१
सक्तो मानुषमांसेषु यथोक्तः शक्तिना पुरा ।
उद्वेजनीयो भूतानां चरिष्यति महीमिमाम् ॥ ३२
द्विरनुव्याहृते राज्ञः स शापो बलवानभूत् ।
रक्षोबलसमाविष्टो विसंज्ञश्चाभवत्तदा ॥ ३३
ततः स नृपतिश्रेष्ठो राक्षसोपहतेन्द्रियः ।
उवाच शक्तिं तं दृष्ट्वा नचिरादिव भारत ॥ ३४
यस्मादसदृशः शापः प्रयुक्तोऽयं त्वया मयि ।
तस्मात्त्वत्तः प्रवर्तिष्ये खादितुं मानुषानहम् ॥ ३५
एवमुक्त्वा ततः सद्यस्तं प्राणैर्विप्रयुज्य सः ।
शक्तिनं भक्षयामास व्याघ्रः पशुमिवेप्सितम् ॥ ३६
शक्तिनं तु हतं दृष्ट्वा विश्वामित्रस्ततः पुनः ।
वसिष्ठस्यैव पुत्रेषु तद्रक्षः संदिदेश ह ॥ ३७ C. 1. 6736 B. 1. 176. 41 K. 1. 192. 48

— c) Ko.1 Ñ V1 B (except B8) Da Dn D2.4 transp. त्वं and तं. Ś1 तत् (for तं). D5 S अन्नार्थिनं त्वम° (M6–8 तम°). — d) Ñ1 °नोपहारय.

26 Before 26, Ś1 S (except M3.5) ins. गंधर्वः; Ko.4 Ñ2 V1 B5.6 D (D4 after corr.) गंधर्व उ°; K1.3 वैशं°; Ñ1.3 B3 D4 (before corr.) वैशं° उ°. — a) Ñ2 V1 B (except B3) Da Dn1.n3 D2.4 ततः (for तदा). — b) Ś1 K (except K2) D2.5 विद्यते नामिषं क्व°. — c) Ñ1 S (except G3.4) पुनः (for तदा).

27 a) T1 G2 महीपो (for राजा तु). B1.3 D2 G3 M5 राक्ष°. — c) Ko.4 D2.5 अथैनं; G4 अन्नेन.

28 a) K1 D5 G1 पुनः (for ततः). — c) Ś1 K1 त्वरितं. — d) G4 °सं व्यपेत°.

29 a) K2 B1.5 D2.4 T2 G5.6 ततः; K3 स च; K4 D5 स तु; Ñ1.2 V1 Dn एतत् (for स तत्). T1 G2 तत्संस्कृत्य च वि°. — b) Ñ V1 °न्नोपहृत°; B1.3 °न्नापिहि°; S अन्नं सामिषमाशु वै. Cd cites अपिहितं.

30 a) Ś1 (orig.) समृद्धश्च°; Ś1 (sup. lin.) K4 समिद्धश्च°; K1 स तृप्तश्च°; B3 संसिद्ध°; M5 स दिव्य°. Cd cites सिद्धचक्षुषा (as in text). T G M3.6–8 स दिव्यचक्षुर्दृष्ट्वा तु (T1 G2 तत्). — b) T1 G2 अभोज्यं (for तदन्नं). — c) K2 B (except B6) D4 न (for अ-). S अभोज्यमिति मत्वाह (G1 °थ) (T1 G2 स मानुषामिषं ज्ञात्वा). — d) T1 G2 निजगाद रुषान्वितः.

31 Before 31, K2 B D ins. ब्राह्मण उ°. — b) Ś1 K (except K2) D5 M5 transp. ददाति and स. Ñ2 V1 B6 D (except D4.5) S नृपाधमः (for नरा°). — c) G3 अस्यैव. G6 मुग्धस्य. — d) K4 B5 D5 G3 M6–8 लोलुपः (G3 °पं); T1 G1.2 लोलता; G4 लोभता; Cd as in text.

32 a) Ś1 K (except K1) °मांसस्य. — b) Ś1 K1.3 S °थोक्तं. Ś1 K B Da2 D1 शक्त्रिणा. Ñ2 V1 D5 तथा (for पुरा).

33 Before 33, S ins. गंधर्वः. — a) K Da B1 Cd °व्याहृतो; T1 G1.2 द्विजेन व्या°; M6–8 द्विरभ्युदा°. K (except Ko) Ñ1 राजा; S वाक्ये. — b) Ś1 K Ñ1.3 ततः स ब°; S शापो हि (G2 M5 -पि) ब°. — d) K2 Ñ1.2 V1 B D (except D5) नृपः (for तदा).

34 a) S °तिः पार्थ. — b) Ko.3.4 Ñ2.3 V1 B6 Dn D1.4.5 S रक्षसा. Ko Ñ1.2 V1 Dn1.n2 T G3–6 M अपहृतेंद्रियः; K2–4 Ñ3 Da D1 उपहृ°; B6 D5 G1.2 अपहृ°. — c) Some MSS. शक्त्रिणं. T1 G2.3 M6–8 दृष्ट्वा तं (by transp.); T2 G1.4–6 M3.5 दृष्ट्वा तु.

35 Ko om. 35[ab]. — a) K4 Dn3 D2 M5 पापः. — b) T1 G3 यस्; G2 स (for अयं). K2.4 Ñ2 V1 B D (except D5) transp. त्वया and मयि. — d) Ñ2 V1 Dn D5 पुरुषान्; D1 मानवान्.

36 Before 36, M6–8 ins. गंधर्वः. — b) Ko–2.4 B3 Da D2.4.5 S °प्रयोज्य. K4 Ñ2.3 V1 Dn च (for सः). K3 तं च प्राणैर्वियोज्य च. — c) Ś1 Ko.1.3.4 Da Dn1 शक्त्रिणं; K2 D1.2.4 T1 G2 तं शाक्तिं; B तं शाक्त्रिं; G3.4 शाक्तिं तं.

37 a) Ś1 K Da शक्त्रिणं; B तं शाक्त्रिं; D2–4 T1 G2 तं

C. 1. 6737 B. 1. 176. 42 K. 1. 192. 49 स ताञ्शतावरान्पुत्रान्वसिष्ठस्य महात्मनः ।
भक्षयामास संक्रुद्धः सिंहः क्षुद्रमृगानिव ॥ ३८
वसिष्ठो घातिताञ्श्रुत्वा विश्वामित्रेण तान्सुतान् ।
धारयामास तं शोकं महाद्रिरिव मेदिनीम् ॥ ३९
चक्रे चात्मविनाशाय बुद्धिं स मुनिसत्तमः ।
न त्वेव कुशिकोच्छेदं मेने मतिमतां वरः ॥ ४०
स मेरुकूटादात्मानं मुमोच भगवानृषिः ।
शिरस्तस्य शिलायां च तूलराशाविवापतत् ॥ ४१
न ममार च पातेन स यदा तेन पाण्डव ।
तदाग्निमिद्ध्वा भगवान्संविवेश महावने ॥ ४२
तं तदा सुसमिद्धोऽपि न ददाह हुताशनः ।
दीप्यमानोऽप्यमित्रघ्न शीतोऽग्निरभवत्ततः ॥ ४३
स समुद्रमभिप्रेत्य शोकाविष्टो महामुनिः ।
बद्ध्वा कण्ठे शिलां गुर्वीं निपपात तदम्भसि ॥ ४४
स समुद्रोर्मिवेगेन स्थले न्यस्तो महामुनिः ।
जगाम स ततः खिन्नः पुनरेवाश्रमं प्रति ॥ ४५

इति श्रीमहाभारते आदिपर्वणि षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

---

शक्तिं; G3 शक्तिं तं; G4 शक्तिं तु. K (except K1) B D2.4.5 G4 निहतं; Ñ2 V1 Da Dn D1 तु मृतं; T1 G2 भक्षितं. — b) Ko.2 ततस्ततः; Ñ2 V1 B D पुनः पुनः.

38 a) Ś1 K2 Ñ1 D5 G1.2.6 शतवरान्; K4 Ñ2 V1 B6 Da2 Dn D1.2.4 M6–8 शक्त्यव°; B1.3 शक्र्यव°; Da1 शक्रव°; G3.5 शतान्व°.

39 a) T1 G2 स्वपुत्रान्खादिता°. — b) S स्वान्सु° (T1 G2 रक्षसा). — c) Ko S क्रोधं; K2–4 कोपं; D5 क्रुद्धं (for शोकं); cf. 1. 167. 7 etc. — d) T1 G2 सुमेरुरिव.

40 a) D5 प्राण° (for चात्म°). — b) Ś1 M8 मतिं (for बुद्धिं). D5 ऋषिसत्तमः; S मुनिपुंगवः. K (except K1) बुद्धिं नृपतिसत्तमः. — c) K2 Ñ2.3 V1 B D (except D5) कौशिको°. T1 G2 न तस्योच्छेदनं मेने. — d) T1 G2 मुनिं (for मेने). Ś1 K (except K3) D5 मेने स मुनिपुंगवः (Ko D5 °सत्तमः).

41 a) Ñ1 सुमेरु°. — b) B1.3 मुमुचे. — c) Ñ2 V1 B D गिरेः (for शिरः). Ś1 K Ñ1.2 V1 Dn तु (for च). G1 शूलस्य च शिखायां च; G6 शिरसस्तस्य निलयं. — d) K2.4 D1 G1 तूलराशिम्.

42 a) M5 transp. न and ममार. T1 G2 स (for च). — b) S तदा स (G1 स तदा; G3 निपाते) मुनिसत्तमः (T1 G2 तदा मुनिवरोत्तमः). — c) B5 तद्; S (except T1) तथा. Ñ2.3m V1 B D (except Da) इद्धं; Cd इद्ध्वा (as in text). K (except K1) तदा(K4 इषा)ग्निमध्ये. — d) K2 महामुनिः; G1 °नले.

43 a) Ś1 K1 तथा. Ko स; K1 स्व-; G1 तु (for सु-). G1 [ऽ]ग्निः. — c) K2.4 T2 G (except G2) M5 °घ्नः. — d) K2.4 D4.5 T G M3.6–8 तदा (for ततः). M5 शैशिरोग्निरभूत्तदा.

44 a) K1.2 Ñ V1 B D (except Da) G1.2 °प्रेक्ष्य. Ś1 K4 समुद्रमभिसंप्रेत्य. — b) D5 क्रोधावि°. — After $44^{ab}$, K4 reads 1. 167. $1^{cd}$, repeating it in its proper place. — K3 om. $44^{c}$–$45^{b}$. — c) T2 G4–6 transp. बद्ध्वा and कण्ठे. — d) N (except B1.3 D2; K3 om.) T1 G3.5 M3 तदांभसि; M6–8 महां°.

45 K3 om. $45^{ab}$ (cf. v. l. 44). — After $45^{ab}$, Ñ3 D4 (marg. *sec. m.*) ins.:

1783* न ममार तदा विप्रः कथंचित्संशितव्रतः ।

— c) Ś1 K1 च ततः; Ko.2–4 स तदा; S (except M6–8) सततं.

Colophon om. in B5. — *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ñ1.2 V1 चैत्ररथ, followed by वासिष्ठ; T1 संभव. Ś1 Ko.1.3 Ñ3 B1.3.6 Da Dn D1.2 M5 (all om. the sub-parvan name) mention only वासिष्ठ (M5 वसिष्ठोपाख्यान). — *Adhy. name:* Ko.4 वसिष्ठशोकः. — *Adhy. no.* (figures, words or both): Dn3 175; D4m 177; T1 174; T2 G2–5 125; G1 127; G6 M 126. — *S'loka no.:* Dn 49; M3 50. — *Aggregate s'loka no.*. Dn2 6714.

## 167

1 Ś1 K1 S om. उवाच. B5 वैशं° उ°. — a) S (except T1 G1–3) स आश्रमपदं दृष्ट्वा. — b) T1 G2 पुत्रैर्विरहितं मुनिः; M6–8 °तं तैर्महामुनिः. — c) K1.3.4 Da1 Dn3 स (for सु-). — d) Ñ2 V1 B D (except D5) T2 G3–6 अपि (for एव).

2 a) D5 T2 G4 पुण्यां (for पूर्णां). — b) G3 °ले तदांभसा. — c) S (except T1 G2.3) वृक्षान्वंचु(G1 °न्मंजु)लनीपादीन्. — d) Ś1 Ko–2 Da1 T1 G1 वहंती; K4

ते तत्र श्रुत्वा पुरुषप्रवीरा
यथानुकामं भृशं प्रतीताः ।
उत्क्रम्य सर्वाणि वसूनि तत्र
सांग्रामिकान्याविविशुर्नृवीराः ॥ १४

तल्लक्षयित्वा द्रुपदस्य पुत्रो
राजा च सर्वैः सह मन्त्रिमुख्यैः ।
समर्चयामासुरुपेत्य हृष्टाः
कुन्तीसुतान्पार्थिवपुत्रपौत्रान् ॥ १५

इति श्रीमहाभारते आदिपर्वणि षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥

## १८७

वैशंपायन उवाच ।
तत आहूय पाञ्चाल्यो राजपुत्रं युधिष्ठिरम् ।
परिग्रहेण ब्राह्मेण परिगृह्य महाद्युतिः ॥ १
पर्यपृच्छददीनात्मा कुन्तीपुत्रं सुवर्चसम् ।
कथं जानीम भवतः क्षत्रियान्ब्राह्मणानुत ॥ २
वैश्यान्वा गुणसंपन्नानुत वा शूद्रयोनिजान् ।
मायामास्थाय वा सिद्धांश्चरतः सर्वतोदिशम् ॥ ३
कृष्णाहेतोरनुप्राप्तान्दिवः संदर्शनार्थिनः ।
ब्रवीतु नो भवान्सत्यं संदेहो ह्यत्र नो महान् ॥ ४
अपि नः संशयस्यान्ते मनस्तुष्टिरिहाविशेत् ।
अपि नो भागधेयानि शुभानि स्युः परंतप ॥ ५
कामया ब्रूहि सत्यं त्वं सत्यं राजसु शोभते । C. 1. 7223 B. 1. 195. 6 K. 1. 210. 6

---

°वकाशं; B3 यथा स्वकामं; B5 °र्थकामं. T3 G2–4 सहर्ष. — K2 om. $14^{c}$–$15^{b}$. — $^{c}$) Ś1 K (K2 om.) Ñ2.3 V1 Dn D1.5 राजन् (for तत्र). — $^{d}$) Cd cites सांग्रामिकानि (as in text). K1 सांग्रामिकान्यामुमुदुर्; Ñ1.2 V1 Dn D1 °मिकं ते (D1 वै) विविशुर्.

15 K2 om. $15^{ab}$ (cf. v. l. 14). — $^{a}$) Ś1 K1 D2 तान्; B5.6 Dn3 D4 सं-; Da स (for तल्). — $^{b}$) T G3–6 सर्वे. G6 °मुख्याः. — $^{c}$) K0.3 Dn D1 समर्थया°. Ñ1 B D2.4 समर्च(Ñ1 B1 °र्थ)यामास उपेत्य हृष्टः. — $^{d}$) Ś1 °पुत्रपौत्रैः; K1.2 Ñ3 °पुत्रपौत्राः; Ñ2 Dn D1 °राजपुत्रान्; T1 °मुख्यपौत्रान्.

Colophon. *Major parvan:* T3 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 द्रौपदीविवाह; K1–4 Ñ3 B Da Dn1.n2 D2.4.5 T3 G1.3.4 M5 द्रौपदी(Da1 D5 M5 om.)स्वयंवर; T1 संभव. — *Adhy. name:* K0 यज्ञासा (read जिज्ञासा); K4 D5 वर्णजिज्ञासा; T3 G1.3.4 पांडवपरिज्ञानं. — *Adhy. no.* (figures, words or both): Dn3 T1 193; D4m 197; D5 G2 144; T3 G4–6 145; G1.3 147; M 146. — *S'loka no.:* Da1 Dn 15; M3 16. — *Aggregate s'loka no.:* Dn2 7199.

## 187

1 Ś1 K (except K0) Da1 D2 S om. उवाच. — $^{a}$) D5 S पांचालो. — $^{c}$) D1 प्रतिग्रहेण; G2 परिग्रहाणां. — $^{d}$) D1 प्रतिगृह्य. K Da D2.5 महामतिः; Ñ1 समद्युतिः.

2 $^{a}$) Ś1 K D5 M5 °पृच्छदमेयात्मा. — $^{b}$) Ś1 T G3–6 M3.5 °पुत्रं युधिष्ठिरं. — Before $2^{cd}$, T1 ins. द्रुपदः. — $^{d}$) Ś1 K D5 ब्राह्मणान्क्षत्त्रियान् (by transp.). G2 ब्राह्मणानुगान्.

3 $^{b}$) K2 Ñ V1 B D G2.6 M7 अथ वा. — $^{c}$) Ś1 G2 वै; Ñ1 वः (for वा). Ñ2.3 V1 B D (except D5) वा विप्रान् (D2 विप्राय). — $^{d}$) B D2.4.5 G1 M6–8 चरंतः. K4 °तो दिशः.

4 $^{a}$) Ñ V1 B (except B6) D (except Da) G2 M5 °प्राप्ता. — $^{b}$) K2 B6 Da देवान्; Ñ2.3 V1 B1.3.5 Dn D1.2.4.5 देवाः (for दिवः). — $^{c}$) T3 G3.4 ब्रवीहि. D5 यथासत्यं. — $^{d}$) Ñ1 S ह्य(M3.5 -प्य)स्ति (for ह्यत्र). K0 विद्यते; K3.4 वर्तते (for नो महान्).

5 $^{b}$) K2 T3 G4(by corr.).5.6 मनस्तुष्टिमिहा°; K4 मनस्तुष्टेरिहाविशत्; Ñ V1 B D मनः संतुष्टिमावहेत् (V1 °विशेत्; Dn3 D4 °हरेत्); T1 G3 °ष्टिरिवाविशेत्; G2 °ष्टिरथाविशत्.

6 $^{a}$) Ś1 T1 G1 कामये; K1 D5 काम्यया; K4 Ñ2.3 V1 B Da Dn D1.2.4 इच्छया. Ñ2 V1 Dn D1 तत्सत्यं (for सत्यं त्वं). T3 G2–5 कामयानस्य ब्रूहि त्वं (G5 मे ब्रूहि); G6 कामयेयं ब्रूहि सत्यं. — $^{b}$) B5 साधुषु (for राजसु). Ś1 K D5 पूज्यते. M7 सत्यं ब्रूहि सुशोभते. — $^{c}$) K0.3.4 D5 तु; M6–8 न (for च). — $^{d}$) S °ष्यं नानृतं भवेत्.

7 $^{a}$) Ś1 त्वमर°; K1 परम°; Ñ1 °संकाशं; D2 ह्यमृत°.

C. 1. 7223
B. 1. 195. 6
K. 1. 210. 6

इष्टापूर्तेन च तथा वक्तव्यमनृतं न तु ॥ ६
श्रुत्वा ह्यमरसंकाश तव वाक्यमरिंदम ।
ध्रुवं विवाहकरणमास्थास्यामि विधानतः ॥ ७

युधिष्ठिर उवाच ।

मा राजन्विमना भूस्त्वं पाञ्चाल्य प्रीतिरस्तु ते ।
ईप्सितस्ते ध्रुवः कामः संवृत्तोऽयमसंशयम् ॥ ८
वयं हि क्षत्रिया राजन्पाण्डोः पुत्रा महात्मनः ।
ज्येष्ठं मां विद्धि कौन्तेयं भीमसेनार्जुनाविमौ ।
याभ्यां तव सुता राजन्निर्जिता राजसंसदि ॥ ९
यमौ तु तत्र राजेन्द्र यत्र कृष्णा प्रतिष्ठिता ।
व्येतु ते मानसं दुःखं क्षत्रियाः स्मो नरर्षभ ।
पद्मिनीव सुतेयं ते ह्रदादन्यं ह्रदं गता ॥ १०
इति तथ्यं महाराज सर्वमेतद्ब्रवीमि ते ।
भवान्हि गुरुरस्माकं परमं च परायणम् ॥ ११

वैशंपायन उवाच ।

ततः स द्रुपदो राजा हर्षव्याकुललोचनः ।
प्रतिवक्तुं तदा युक्तं नाशकत्तं युधिष्ठिरम् ॥ १२
यत्नेन तु स तं हर्षं संनिगृह्य परंतपः ।
अनुरूपं ततो राजा प्रत्युवाच युधिष्ठिरम् ॥ १३
पप्रच्छ चैनं धर्मात्मा यथा ते प्रद्रुताः पुरा ।
स तस्मै सर्वमाचख्यावानुपूर्व्येण पाण्डवः ॥ १४
तच्छ्रुत्वा द्रुपदो राजा कुन्तीपुत्रस्य भाषितम् ।
विगर्हयामास तदा धृतराष्ट्रं जनेश्वरम् ॥ १५
आश्वासयामास च तं कुन्तीपुत्रं युधिष्ठिरम् ।
प्रतिजज्ञे च राज्याय द्रुपदो वदतां वरः ॥ १६
ततः कुन्ती च कृष्णा च भीमसेनार्जुनावपि ।
यमौ च राज्ञा संदिष्टौ विविशुर्भवनं महत् ॥ १७
तत्र ते न्यवसन्राजन्यज्ञसेनेन पूजिताः ।

---

— d) G4 आस्थास्याम ; M6-8 °स्यति ; Cd as in text.

8 Ś1 K1.2 S om. उवाच. — a) G3 दुर्मना (for वि°). — b) D5 S पांचाल. — c) Ś1 K ध्रुवं कामः. — d) K3 न संशयः ; B3 अशेषतः (for असं°).

9 a) Some MSS. मा (for मां). — e) K4 Ñ2 Dn D1.5 आभ्यां. — f) B1m विजिता. G2 जन्न°.

10 a) Ñ1 तत्र तु (by transp.). Ñ2.3 V1 B D (except D5) M6-8 च ; T G2-6 M3.5 तौ (for तु). Ñ2.3 V1 B D (except D5) कुंती च (for राजेन्द्र). K2 G1 इमौ यमौ च राजेंद्र (G1 माद्रेयौ). — b) Ñ2 Dn D1 व्यवस्थिता (for प्रति°). — c) M व्यैतु. — d) K2.4 S स्म (for स्मो). B5 S (except G2) नराधिप. — f) Ñ V1 B5 Dn2.n3 D1 G1 M7 अन्यह्रदं. Ś1 K D5 T1 ह्रदाद्ध्रदमि(K2 °द् इ)वागता.

11 a) Ś1 K D5 G2 इति सत्यं ; T3 G3.4 इति तत्वं. B3 महाभाग. — b) Ko.2 B Da D4 G1 M5 सत्यम् (for सर्वम्). M6-8 एव (for एतद्). — c) Ś1 K D4.5 च (for हि).

12 Ś1 K1.3 D2 S om. उवाच (M3.5 om. the ref.). — T1 (hapl.) om. 12b-13c. — b) G1 हर्षेणाकुल°. — cd) Ñ3 प्रतिवाक्यं ; D1 °कर्तुं ; T1 °युक्तं. K2 तथा युक्तं ; Ñ2 V1 Dn D1.2.5 मुदा युक्तो (D5 °क्तं) (for तदा युक्तं). Ś1 K1.3 Ñ1 V1 नाशक्नोत्तं. S (T1 om.) °क्तं न शक्तोभूद्धर्मसूनुं तदानघ.

13 a) T1 om. 13abc (cf. v. l. 12). Ko.4 च (for तु). Da D2 स तु (by transp.). Ko.2.3 स (K2 प्र-) हर्षं वै ; T3 G3.4 परं हर्षं. — b) Ñ3 B6 Da D4.5 विनि°. B5 T3 G (except G6) M6-8 °तप. — c) K2 N1.2 V1 Dn D1 तदा (for ततो). Ś1 K1 Ñ2 V1 B D (except D5) वाचा ; Ñ1 वाक्यं ; Ñ3 वाचं (for राजा).

14 a) Ko.4 Ñ1 D5 पप्रच्छैनं स धर्मात्मा ; S (G6 corrupt) पर्यपृच्छददीनात्मा. — b) G2 यथा तैः प्रद्रुतं. K (except K1) Ñ V1 B Dn D1.4.5 M पुरात्. — c) S तथास्मै. S आचष्ट (for आचख्यौ). — d) Ś1 K (except K3) B1.3 Da1 D1.2.5 G1.2 °पूर्वेण. B5 पार्थिवः ; G1 भारत.

15 d) Ñ2.3 V1 Dn D1 S (except M5) नरे°.

16 a) Ko D5 G1.2.6 तदा ; K3 स तं. — c) T1 G (except G3.4) M3.5 °जज्ञे स ; M6-8 °जज्ञेथ. M3 राष्ट्राय. K2 °जज्ञे वरार्हाय. — d) S (except T1 G3 M5) ददतां.

17 Before 17, M6-8 ins. वैशं°. — c) G2 राज्ञा च (by transp.). Ko.3.4 Ñ2.3 Dn D1.4 T1 M5 संदिष्टं ; B (except B5) Da D2 निर्दिष्टं ; T3 G (except G3.4) M3.6-8 संदिष्टा. — d) K2 भुवनोत्तमं.

18 c) K1.4 Ñ2.3 V1 B D प्रत्याश्वस्त(K1.4 °श्वस्ता- ; D1 °गत)स्ततो ; K2 प्रज्ञास्वस्थांस्ततो ; S पर्याश्वस्तां(T3 G2-4 °श्वस्त- ; G1 °श्वस्ता)स्तदा (M5 प्रत्याश्वास्य ततो). — d) Ñ2.3 V1 B D तं (for तान्).

19 Before 19, T3 G2-6 M6-8 ins. द्रुपदः. G2

प्रत्याश्वस्तांस्ततो राजा सह पुत्रैरुवाच तान् ॥ १८
गृह्णातु विधिवत्पाणिमद्यैव कुरुनन्दनः ।
पुण्येऽहनि महाबाहुरर्जुनः कुरुतां क्षणम् ॥ १९
ततस्तमब्रवीद्राजा धर्मपुत्रो युधिष्ठिरः ।
ममापि दारसंबन्धः कार्यस्तावद्विशां पते ॥ २०

द्रुपद उवाच ।

भवान्वा विधिवत्पाणिं गृह्णातु दुहितुर्मम ।
यस्य वा मन्यसे वीर तस्य कृष्णामुपादिश ॥ २१

युधिष्ठिर उवाच ।

सर्वेषां द्रौपदी राजन्महिषी नो भविष्यति ।
एवं हि व्याहृतं पूर्वं मम मात्रा विशां पते ॥ २२
अहं चाप्यनिविष्टो वै भीमसेनश्च पाण्डवः ।
पार्थेन विजिता चैषा रत्नभूता च ते सुता ॥ २३
एष नः समयो राजन्रत्नस्य सहभोजनम् ।
न च तं हातुमिच्छामः समयं राजसत्तम ॥ २४
सर्वेषां धर्मतः कृष्णा महिषी नो भविष्यति ।
आनुपूर्व्येण सर्वेषां गृह्णातु ज्वलने करम् ॥ २५

द्रुपद उवाच ।

एकस्य बह्व्यो विहिता महिष्यः कुरुनन्दन ।
नैकस्या बहवः पुंसो विधीयन्ते कदाचन ॥ २६
लोकवेदविरुद्धं त्वं नाधर्मं धार्मिकः शुचिः ।
कर्तुमर्हसि कौन्तेय कस्माते बुद्धिरीदृशी ॥ २७

युधिष्ठिर उवाच ।

सूक्ष्मो धर्मो महाराज नास्य विद्मो वयं गतिम् । C. 1. 7246 B. 1. 195. 29 K. 1. 210. 29

---

(? hapl.) om. 19–20. — $^{b}$) Ñ2.3 B (except B6) Dn D1.4 S (except G6) अद्यायं. K (except K1) D2 T3 G4.5 M6.8 °नंदन. — $^{c}$) Ś1 K D5 महाराज. — $^{d}$) K2.3 फाल्गुनः. B6 D4 क्रियतां. B6 क्षणः.

20 G2 om. 20 (cf. v. l. 19). Before 20, Ñ2.3 V1 B D ins. वैशं° उ° (D2 om. उ°); S (except G2 M3.5) वैशं°. — $^{a}$) Ñ V1 B D (except D5) तमब्रवीत्ततो राजा (Ñ1 राजन्). — $^{b}$) Ś1 K Ñ1.2 V1 Dn D1.5 धर्मात्मा स (Ñ1.2 V1 Dn च); Ñ3 धर्मराजो. — After $20^{ab}$, M6–8 ins. 1904*. — Before $20^{cd}$, M5 ins. युधिष्ठिरः. — $^{c}$) V1 D4 मयापि. — $^{d}$) Ś1 M5 तात (for तावद्). S (except G2) ins. after 20 (M6–8, after $20^{ab}$):

1904* तस्मात्पूर्वं मया कार्यं यद्भवाननुमन्यते ।
[ M6–8 °मंस्यते. ]

21 Ś1 K1 S om. उवाच. — $^{ab}$) Ñ3 B Da D2.4 transp. विधिवत् and दुहितुः. — $^{d}$) D5 तस्मै. Ñ3 B Da D2.4 कृष्णा (B3 कन्या) प्रदीयतां.

22 Ś1 K1.3 S om. उवाच. — $^{ab}$) Ś1 K Ñ2 V1 Dn D1.5 transp. द्रौप° and महि°. — $^{c}$) Ñ2.3 V1 B Dn D1 प्र- (B5 च) (for हि). — $^{d}$) Ñ3 B (except B5) D2 महीपते.

23 $^{a}$) K0 चास्म्यनि°; D4 चास्यां नि°. — $^{c}$) Ś1 K1 M5 पार्थेनाव(M5 °पि)जिता. Da चैव; M3 राजन्; M6–8 कृष्णा (for चैषा). — $^{d}$) K0.3.4 D5 हि ते सुता; Ñ2.3 V1 B Da Dn D1.2.4 सुता तव.

24 G2 M6–8 om. 24. — $^{b}$) K2 T3 G1.3.4 लब्ध°; K3 D2 अन्न° (for रत्न°). — $^{c}$) S (G2 M6–8 om.) न चैनं. Ś1 K1 N1 T1 G3 M5 °मिच्छामि. — $^{d}$) D4 परमं (for समयं). — After 24, S (except G2 M6–8) ins.:

1905* अक्रमेण निवेशे च धर्मलोपो महान्भवेत् ।
निर्जिता चैव पार्थेन रत्नभूता च ते सुता ।
[ L. 2 = (var.) $23^{cd}$. ]

25 $^{ab}$) Ś1 D5 transp. धर्म° and महि°. — $^{cd}$) K (except K3) Da1 D1 G2 आ(K2 D1 अ)नुपूर्वेण. T1 G1 सर्वे हि गृह्णीमो ज्वलने; T3 G2–6 M गृह्णंतु सर्वेऽग्नौ (M5 सर्वेऽग्नौ गृह्णंतु) ज्वलिते. K (except K1) Ñ V1 B D करान्.

26 Ś1 K1 S om. उवाच. — $^{c}$) Ñ3 V1 B Da D2.4 तात; Cd Arjp पुंसः (as in text). — $^{d}$) K2 प्रशंसंति कदा°; Ñ2.3 V1 B D श्रूयंते पतयः क्वचित्. — After 26, S ins.:

1906* सोऽयं न लोके वेदे वा जातु धर्मः प्रशस्यते ।

27 $^{a}$) B5 तं; T G च (for त्वं). — $^{b}$) Ś1 K अधर्मं (see below); Ñ1 नाधर्मो. Ñ2.3 V1 B D धर्मवि(Da °व)च्छुचिः (D1 धर्मकं शुचिः). — $^{c}$) Ś1 K (except K1) कर्तुमिच्छसि (see above). — $^{d}$) K0 कथं; K2 यस्मात्. K3 B5 मतिर्; B3 भक्तिर् (m as in text); T1 कीर्तिर्.

28 Ś1 K1.3 S om. उवाच (G1 om. the ref.). — S ins. after युधि° (G1, which om. the ref., after 27):

1907* लोकधर्मविरुद्धोऽयं धर्मो धर्मभृतां वर ।
[ T1 G1 M5 लोकवेदवि°; M3 लोकवेदावि°; M6–8 °वेदाद्वि°. ]

— $^{b}$) S विद्म गतिं वयं (T3 G3.4 स्वयं). — $^{c}$) Ś1 K (except K1) N2.3 सर्वेषाम्. K0.2.4 Da Dn1 D1.2.5 °पूर्वेण. — $^{d}$) B3 वर्त्मान्वयामहे; S तमनु(M3.5 तैरनु)यामहे.

C. 1. 7246 B. 1. 195. 29 K. 1. 2.0. 29 पूर्वेषामानुपूर्व्येण यातं वर्त्मानुयामहे ॥ २८

न मे वागनृतं प्राह नाधर्मे धीयते मतिः ।
एवं चैव वदत्यम्बा मम चैव मनोगतम् ॥ २९

एष धर्मो ध्रुवो राजंश्चरैनमविचारयन् ।
मा च तेऽत्र विशङ्का भूत्कथंचिदपि पार्थिव ॥ ३०

द्रुपद उवाच ।

त्वं च कुन्ती च कौन्तेय धृष्टद्युम्नश्च मे सुतः ।
कथयन्त्वितिकर्तव्यं श्वः काले करवामहे ॥ ३१

वैशंपायन उवाच ।

ते समेत्य ततः सर्वे कथयन्ति स्म भारत ।
अथ द्वैपायनो राजन्नभ्यागच्छद्यदृच्छया ॥ ३२

इति श्रीमहाभारते आदिपर्वणि सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥

## १८८

वैशंपायन उवाच ।

ततस्ते पाण्डवाः सर्वे पाञ्चाल्यश्च महायशाः ।
प्रत्युत्थाय महात्मानं कृष्णं दृष्ट्वाभ्यपूजयन् ॥ १

प्रतिनन्द्य स तान्सर्वान्पृष्ट्वा कुशलमन्ततः ।
आसने काञ्चने शुभ्रे निषसाद महामनाः ॥ २

अनुज्ञातास्तु ते सर्वे कृष्णेनामिततेजसा ।

29 Before 29, G1 ins. युधि°. — $29^{ab}$=1. 188. $13^{ab}$. — $^{b}$) Ś1 K1 नीयते. K0.3.4 N1 B Da D2.4.5 मनः; G3 गतिः. — $^{c}$) K1 एवमेव; Ñ1 एवं च मे; D5 एवं चैषा. K2 मतं मह्यं. — $^{d}$) Ñ V1 B Dn D1.2.4 मम चैतन्; Da सर्वमेतन्; S ममापि च. — After 29, S ins.:

1908* आश्रमे रुद्रनिर्दिष्टाद्व्यासादेतन्मया श्रुतम् ।

30 T1 om. 1. 187. 30–188. 6. — $^{a}$) Ñ1 धर्म एव; S धर्म एष (G2 -वित्तां; G3 -वित्त्वा). — $^{b}$) K0 Da चरेयम्; K2 चरित्रम्; K4 Ñ1 चरेनम्; B6 D2.5 चरेमम्. K4 B6 Da D2.5 मा विचारयन् (Da °रय). S (T1 om.) विचार्यैवं (G6 °यैव; M5 यस्मादेवं) करोम्यहं. — $^{c}$) Ñ3 S (except G1; T1 om.) तत्र (for तेऽत्र). Ñ1 मा च तत्र विशंको भूः; Ñ2.3 V1 Dn D1 मा च शंका तत्र ते स्यात्. — K0 om. from ऽत्र (in $30^{c}$) up to $31^{a}$. — $^{d}$) Ñ1 कदाचिदपि. S (T1 om.) न ह्यधर्मे मतिर्मम.

31 T1 om. 31; K0 om. $31^{a}$ (cf. v. l. 30). Ś1 K1 S om. उवाच (T1 om. the ref.). — $^{a}$) Ś1 कौंतेय कुंती च (by transp.). — $^{c}$) S (T1 om.) कथयित्वेति°. — $^{d}$) K0 यत् (for श्वः). K1 S (except G5.6 M5; T1 om.) काल्ये.

32 T1 om. 32 (cf. v. l. 30). Ś1 K1.3 D2 S om. उवाच. — $^{a}$) Ñ1 वचः सर्वे. — $^{b}$) Ś1 K1 तानुत; M6–8 पांडवाः (for भारत). — $^{c}$) S (T1 om.) ततो (for अथ). — $^{d}$) S (T1 om.) आजगाम (G1 M6.8 °गामा·) विचिंतितः (G2 आससाद महामुनिः).

Colophon om. in T1. — *Major parvan:* T3 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 K3 द्रौपदीविवाह; K0–2.4 Ñ3 B Da Dn1.n2 D2.4.5 T3 G3.4 M3.5 द्रौपदीस्वयंवर. — *Adhy. name:* K0.3.4 द्रुपदविमर्शः; T3 G3.4 द्रुपदयुधिष्ठिरसंवादः. — *Adhy. no.* (figures, words or both): Dn3 194; D4m 198; D5 G2 145; T3 G4–6 146; G1.3 148; M 147. — *S'loka no.:* Dn 33; M3 36.—*Aggregate s'loka no.:* Dn2 7232.

### 188

1 T1 om. 1 (cf. v. l. 1. 187. 30). Ś1 K1.3 D2 S om. उवाच. — $^{b}$) Ś1 K D5 द्रुपद°; S (T1 om.) पांचाल° (G2 पार्थिव°). S (T1 om.) महारथः. — $^{d}$) Ś1 K व्यासं (for कृष्णं). N2.3 B D (except D5) सर्वे (for दृष्ट्वा). N (except V1) -भ्यवाद(K1 °च)यन्.

2 T1 om. 2 (cf. v. l. 1). — $^{a}$) T3 G (except G1.6) प्रत्यनंदत्. Ñ2.3 B Dn D1.2.4 स तां पूजां. K2 तेनाभिनंदिताः सर्वे. — $^{b}$) K0 Da Dn1 दृष्ट्वा. K2.3 D2 S (T1 om.) च कुशलं ततः. — $^{c}$) K1 Ñ2.3 B5 Dn शुद्धे. K2 आसनेषु महार्हेषु; V1 आसने रुचिरे मृष्टे. — $^{d}$) S (T1 om.) °मुनिः (M3 °मतिः). K2 निषेदुस्ते परंतपाः.

3 T1 om. 3 (cf. v. l. 1); K2 om. 3; G2 om. 3–4. — $^{a}$) Ñ1 ततः; G5 च ते (for तु ते). — $^{b}$) Ś1 K (K2 om.) व्यासेन (for कृष्णेन). K3 अमितबुद्धिना; D5 अक्लिष्टकर्मणा. — $^{d}$) Ś1 K (K2 om.) ते परंतपाः (Ś1 K1 °प); D5 ते महातपाः (for द्विपदां वराः).

आसनेषु महार्हेषु निषेदुर्द्विपदां वराः ॥ ३
ततो मुहूर्तान्मधुरां वाणीमुच्चार्य पार्षतः ।
पप्रच्छ तं महात्मानं द्रौपद्यर्थे विशां पतिः ॥ ४
कथमेका बहूनां स्यान्न च स्याद्धर्मसंकरः ।
एतन्नो भगवान्सर्वं प्रब्रवीतु यथातथम् ॥ ५

व्यास उवाच ।

अस्मिन्धर्मे विप्रलब्धे लोकवेदविरोधके ।
यस्य यस्य मतं यद्यच्छ्रोतुमिच्छामि तस्य तत् ॥ ६

द्रुपद उवाच ।

अधर्मोऽयं मम मतो विरुद्धो लोकवेदयोः ।
न ह्येका विद्यते पत्नी बहूनां द्विजसत्तम ॥ ७
न चाप्याचरितः पूर्वैरयं धर्मो महात्मभिः ।
न च धर्मोऽप्यनेकस्थश्चरितव्यः सनातनः ॥ ८
अतो नाहं करोम्येवं व्यवसायं क्रियां प्रति ।
धर्मसंदेहसंदिग्धं प्रतिभाति हि मामिदम् ॥ ९

धृष्टद्युम्न उवाच ।

यवीयसः कथं भार्यां ज्येष्ठो भ्राता द्विजर्षभ ।
ब्रह्मन्समभिवर्तेत सद्वृत्तः संस्तपोधन ॥ १०
न तु धर्मस्य सूक्ष्मत्वाद्गतिं विद्मः कथंचन ।
अधर्मो धर्म इति वा व्यवसायो न शक्यते ॥ ११
कर्तुमस्मद्विधैर्ब्रह्मंस्ततो न व्यवसाम्यहम् ।
पञ्चानां महिषी कृष्णा भवत्विति कथंचन ॥ १२

युधिष्ठिर उवाच ।

न मे वागनृतं प्राह नाधर्मे धीयते मतिः ।
वर्तते हि मनो मेऽत्र नैषोऽधर्मः कथंचन ॥ १३
श्रूयते हि पुराणेऽपि जटिला नाम गौतमी । C. 1. 7265 B. 1. 196. 14 K. 1. 211. 14

4 T1 G2 om. 4 (cf. v. l. 1, 3). — b) G6 वाचम्. — c) B1.3 पर्यपृच्छन्महा°. — d) Ñ1.2 V1 Dn D1 S (T1 G2 om.) द्रौपद्यर्थं. K (except K1) Ñ1.2 V1 Da Dn D1 विशां पते; Ñ3 B D4 स्वयंवरे; D2.5 महामते; S (T1 G2 om.) महामुनिं.

5 T1 om. 5 (cf. v. l. 1). Before 5, S (except T1) ins. द्रुपदः. — a) V1 न चैवैका ब°. — b) Ś1 K1 वा (for न्च). Ñ2 Dn D1 धर्मपत्नी न संकरः. — c) Ñ2.3 Dn D1.5 एतन्मे.

6 T1 om. 6 (cf. v. l. 1). K1.2 S om. उवाच. — a) D5 विरुद्धे हि; G1 M विप्रलुप्ते; Cd as in text. Cf. Winternitz, *JRAS.* 1897. 740 (footnote 1). — b) K4 कथं (for लोक-). K (except K2) °धिनि; B5 °धने; D2 °विरुद्धके; S (T1 om.) °धिते. — d) K2.4 M (except M5) तत्वतः (for तस्य तत्).

7 Ś1 K1.2 S om. उवाच. — a) K0.4 मम मतिः. N1 अधर्मोयं मतो विद्धि. — b) K0 विरुद्धो वेदलोकयोः; G2 लोकवेदविरुद्धयोः. — c) Ñ1 युज्यते. T1 भार्या (for पत्नी).

8 G2 om. $8^{c}$–$11^{b}$. — c) Ś1 K0.1.3 अनेकः सन्; K2 अनेकस्मिन्. K4 Ñ V1 B D न चाप्यधर्मो विद्वद्भिः. — d) Ñ V1 B D कथंचन (for सना°).

9 G2 om. 9 (cf. v. l. 8). — a) K0.4 Ñ2 V1 D1 T1 G1 ततो; Ñ3 कथं (for अतो). Ñ2.3 V1 Da D1.2 S °म्येनं (M6–8 °म्येतत्); B °म्येतं. — b) T3 G3–6 सुतां प्रति; G1 तु यां प्रति. — c) Ñ2.3 V1 Dn धर्मः सदैव संदिग्धः. — d) B Da D2.4 च; T1 G6 ह (for हि). K2 मम त्विदं; Ñ1 हि मापि च; Ñ2.3 Dn D1 हि मे स्वयं.

10 G2 om. 10 (cf. v. l. 8). Ś1 K1 S om. उवाच. — b) G5 भ्राता ज्येष्ठो (by transp.). Ś1 K1 नरर्षभ. — d) N3 संभृतः सन्; V1 न सद्वृत्तस्.

11 G2 om. $11^{ab}$ (cf. v. l. 8). — a) D5 सूक्ष्मस्य. — b) K2 T3 G1.3–5 विद्म; D5 T1 G6 वेद्मि; M5 विदुः. B6 D2 न कं(D2 कां)चन. — Ñ1 (hapl.) om. $11^{c}$–$12^{d}$. — c) T1 G1.5.6 M च (for वा). G2 न च धर्मोधर्म इति.

12 Ñ1 om. 12 (cf. v. l. 11). — a) V1 °द्विधैर्युक्तं. — b) T3 G3–6 अतो न; M6–8 ततोन्य- (M6 °न्यद्). Ñ2 B (except B6) D ततोयं न (D5 च) व्यवस्यते (B3 D1 °ति); T1 न व्यवस्याम्यहं ततः.

13 $13^{ab}$=1. 187. $29^{ab}$. — Ś1 K1.3 S om. उवाच. — b) K0.3.4 विद्यते (for धीयते). Ñ1.3 B Da D2.4 मनः. — c) S (except T1) च (for हि). K4 निमित्तो मे; B5 मनो मे तु. — d) Ś1 K1.4 G2 नैष धर्मः; Da1 नैको धर्मः.

14 a) K4 D5 transp. हि and अपि. S पुराणेषु. — b) S जटिलो नाम गौतमः. — After $14^{ab}$, S ins.:

1909* तस्य पुत्री महाप्राज्ञा गौतमस्य यशस्विनी ।

[ T3 G3.4 जटिलस्य (for गौतम°). G2 यशस्विनः. ]

— c) K2 ऋषि मे ध्यायिनवती (sic); B1m Cd ऋषी-नुद्धाहितवती. — d) K0.3.4 Ñ2.3 V1 B1.3 Dn D1.2 S सप्त (as in text); the rest सर्व-. K0 वरे; K2.3 N V1

C. 1. 7265 B. 1. 196. 14 K. 1. 211. 14 ऋषीनध्यासितवती सप्त धर्मभृतां वर ॥ १४
गुरोश्च वचनं प्राहुर्धर्मं धर्मज्ञसत्तम ।
गुरूणां चैव सर्वेषां जनित्री परमो गुरुः ॥ १५
सा चाप्युक्तवती वाचं भैक्षवद्भुज्यतामिति ।
तस्मादेतदहं मन्ये धर्मं द्विजवरोत्तम ॥ १६

कुन्त्युवाच ।

एवमेतद्यथाहायं धर्मचारी युधिष्ठिरः ।
अनृतान्मे भयं तीव्रं मुच्येयमनृतात्कथम् ॥ १७

व्यास उवाच ।

अनृतान्मोक्ष्यसे भद्रे धर्मश्चैष सनातनः ।
न तु वक्ष्यामि सर्वेषां पाञ्चाल शृणु मे स्वयम् ॥ १८
यथायं विहितो धर्मो यतश्चायं सनातनः ।
यथा च प्राह कौन्तेयस्तथा धर्मो न संशयः ॥ १९

वैशंपायन उवाच ।

तत उत्थाय भगवान्व्यासो द्वैपायनः प्रभुः ।
करे गृहीत्वा राजानं राजवेश्म समाविशत् ॥ २०
पाण्डवाश्चापि कुन्ती च धृष्टद्युम्नश्च पार्षतः ।
विचेतसस्ते तत्रैव प्रतीक्षन्ते स्म तावुभौ ॥ २१
ततो द्वैपायनस्तस्मै नरेन्द्राय महात्मने ।
आचख्यौ तद्यथा धर्मो बहूनामेकपत्निता ॥ २२

इति श्रीमहाभारते आदिपर्वणि अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥

---

B Dn $D_{1.2.4.5}$ वरा; $Da_1$ वराः; $Da_2$ वरः; S (except $G_2$) वरान्. — After 14, $K_4$ $\tilde{N}_{1.2}$ $V_1$ (om. line 1) Dn $D_{4.5}$ S ins.:

1910* तथैव मुनिजा वार्क्षी तपोभिर्भावितात्मनः ।
संगताभूद्दश भ्रातॄनेकनाम्नः प्रचेतसः ।

[(L. 1) $K_4$ मनुजा वार्क्षी; T $G_{2.4}$(by corr.).$_6$ मृगशावाक्षी. $G_1$ लाक्षी; $G_3$ दक्षी (for वार्क्षी). S भावितान्मुनीन् ($M_3$ °नृषीन्). — (L. 2) $T_1$ $G_1$ M दशोपतस्थुषी भ्रा°; $T_3$ $G_{4-6}$ दशाभजदृषीन्भ्रा°; $G_2$ दशागच्छत्सुमहर्षीन्; $G_3$ दश प्राचेतसो भ्रा°.]

15 $^{a}$) $K_2$ तद्; $\tilde{N}_{2.3}$ Dn $D_1$ हि (for च). — $^{b}$) $Ś_1$ K $\tilde{N}_{2.3}$ Da Dn धर्म्यं. $B_5$ $D_1$ S धर्मभृतां वराः ($B_5$ $D_1$ $T_1$ $M_5$ वर; $G_5$ वरः; $G_6$ वरं). — $^{d}$) $D_4$ $T_1$ $G_1$ जननी (for जनित्री). $N_{2.3}$ Dn $D_1$ माता परमको गुरुः.

16 $^{a}$) $Ś_1$ K $D_5$ राजन्; $\tilde{N}_1$ वाक्यं; $V_1$ पार्थं; S वाचा. — $^{b}$) Some MSS. भैक्ष्यवद्. — $^{c}$) $K_{0.3.4}$ $\tilde{N}$ B (except $B_6$) Da $D_4$ एतमहं; $V_1$ एतन्मतं. — $^{d}$) $K_{1.3}$ धर्म्यं. $\tilde{N}_2$ $V_1$ Dn $D_1$ S परं धर्मं द्विजो($G_4$ नृपो)त्तम ($T_1$ परं द्विजवरोत्तम).

17 $Ś_1$ $K_1$ S कुंती ($T_1$ पृथा) (all om. उवाच). — After the ref., S (except $T_1$ $G_{2.5.6}$) ins.:

1911* भुज्यतां भ्रातृभिः सार्धमित्यर्जुनमचोदयम् ।

— $^{a}$) $K_2$ (*sup. lin.*) $\tilde{N}_{2.3}$ B D यथा प्राह ($D_5$ चाहं); $K_{3.4}$ $T_3$ यथा चाहं; $G_2$ यथाहार्यं $G_5$ यथाभार्यां; $G_6$ यथाभार्यः. — $^{d}$) $Ś_1$ $K_1$ $\tilde{N}_{2.3}$ $V_1$ $B_5$ D (except Da) मुच्येहम्.

18 $Ś_1$ $K_1$ S om. उवाच. — $^{a}$) Some MSS. मोक्षसे. — $^{b}$) $\tilde{N}_1$ धर्मश्चापि; $D_5$ धर्म एष. — $D_{2.5}$ (hapl.) om. $18^{c}$–$19^{b}$. — $^{c}$) $K_4$ $\tilde{N}_{2.3}$ $V_1$ B $Dn_1$ $D_4$ $T_3$ $G_{2-6}$ ननु; $\tilde{N}_1$ न प्र°; $T_1$ न हि. $Ś_1$ प्रेक्ष्यामि; $K_1$ प्र°; $M_3$ पश्यामि (*inf. lin.* as in text). — $^{d}$) K $V_1$ Da पांचाल्य. S वचः.

19 $D_{2.5}$ om. $19^{ab}$ (cf. v. l. 18). — $^{c}$) $B_{5.6}$ Da $D_{2.4}$ प्राह च (by transp.); S चाप्याह ($G_1$ चाह स).

20 $K_{1.3.4}$ $D_2$ S om. उवाच. — $^{a}$) $M_{6-8}$ अथ उ°. — $^{b}$) S कृष्णद्वैपायनः. $\tilde{N}_3$ स्वयं; B Da $D_{2.4}$ शुचिः (for प्रभुः). — $^{d}$) $V_1$ वासवेश्म.

21 $^{a}$) $K_2$ $B_{5.6}$ Da त्वपि; $K_3$ चैव; $D_5$ S त्वथ (for चापि). — $^{b}$) $K_{2.4}$ पार्थिवः (for पार्षतः). — $^{c}$) $K_4$ $\tilde{N}$ $V_1$ B D विविशुस्तेपि (Dn $D_1$ °शुर्यत्र) तत्रैव; S मिथः कथाभिस्ते तत्र. — $^{d}$) $D_5$ S (except $T_1$ $G_6$) °क्षंति.

22 $^{a}$) T G (except $G_1$) द्वैपायनस्ततस्तस्मै (by transp.). — $^{b}$) S विशां पते. — $^{c}$) $K_1$ तत्र यो धर्मो; $\tilde{N}_1$ $D_2$ तद्यथाधर्मं; $V_1$ तद्यथावृत्तं. — After 22, $K_4$ $D_4$ S ins.:

1912* यथा देवा ददुश्चैव राजपुत्र्याः पुरा वरम् ।
धर्माद्यास्तपसा तुष्टाः पञ्चपत्नीत्वमीश्वराः ।

[(L. 2) $K_4$ विप्राद्याः; $D_4$ ब्रह्माद्याः. $K_4$ ईश्वरात्.]

Colophon. *Major parvan:* $T_3$ G M संभव (for आदि°). — *Sub-parvan:* $Ś_1$ $K_{1.2}$ $B_1$ Dn $D_5$ $T_3$ $G_{3.4}$ $M_{3.5}$ द्रौपदी($M_5$ om.)स्वयंवर; $K_3$ द्रौपदीविवाह; $B_5$ वैवाहिक; $T_1$ संभव; to it $B_{1.5}$ add पंचेंद्रोपाख्यान. $\tilde{N}_3$ $B_{3.6}$ Da $D_{2.4}$ (all om. the sub-parvan name) mention only पंचेंद्रो($B_{3.6}$ °द्रियो)पाख्यान. — *Adhy. name:* $K_{0.3.4}$ व्यासागमनं; $T_3$ $G_{1.3.4}$ व्यासद्रुपदसंवादः. — *Adhy. no.* (figures, words or both): $Dn_3$ 195;

# १८९

व्यास उवाच ।

पुरा वै नैमिषारण्ये देवाः सत्रमुपासते ।
तत्र वैवस्वतो राजञ्शामित्रमकरोत्तदा ॥ १
ततो यमो दीक्षितस्तत्र राज-
न्नामारयत्किंचिदपि प्रजाभ्यः ।
ततः प्रजास्ता बहुला बभूवुः
कालातिपातान्मरणात्प्रहीणाः ॥ २
ततस्तु शक्रो वरुणः कुबेरः
साध्या रुद्रा वसवश्चाश्विनौ च ।
प्रणेतारं भुवनस्य प्रजापतिं
समाजग्मुस्तत्र देवास्तथान्ये ॥ ३
ततोऽब्रुवँल्लोकगुरुं समेता
भयं नस्तीव्रं मानुषाणां विवृद्ध्या ।
तस्माद्भयादुद्विजन्तः सुखेप्सवः
प्रयाम सर्वे शरणं भवन्तम् ॥ ४

ब्रह्मोवाच ।

किं वो भयं मानुषेभ्यो यूयं सर्वे यदामराः ।
मा वो मर्त्यसकाशाद्वै भयं भवतु कर्हिचित् ॥ ५

देवा ऊचुः ।

मर्त्या ह्यमर्त्याः संवृत्ता न विशेषोऽस्ति कश्चन ।
अविशेषादुद्विजन्तो विशेषार्थमिहागताः ॥ ६

ब्रह्मोवाच ।

वैवस्वतो व्यापृतः सत्रहेतो-
स्तेन त्विमे न म्रियन्ते मनुष्याः । C. 1. 7281 B. 1. 197. 7 K. 1. 214. 7

---

$D_4$m 199; $D_5$ $G_2$ 146; $T_1$ 175 (read 195); $T_3$ $G_{4-6}$ 147; $G_{1.3}$ 149; M 148. — *S'loka no.:* Dn 23; $M_3$ 24. — *Aggregate s'loka no.:* $Dn_2$ 7255.

☞ A passage of nearly 120 lines, comprising two addl. adhy., given in App. I (No. 100), is ins. in $D_4$ S after adhy. 188, in $K_4$ after 1. 189. 49. ❀ Nil.: अत्र यत्तद्देवा ददुरित्यादिना त्रिपथगां नदीमित्यन्तो नारायण्युपाख्यानग्रन्थोऽध्यायद्वयात्मकः क्वचित्पुस्तके पठ्यते ।❀ Nil.'s यत्तद्देवा is no doubt a v. l. of यथा देवा of 1912*.

## 189

1 Ś$_1$ $K_1$ $D_4$ S om. उवाच. — $^a$) Many S MSS. नैमिशा°; cf. v. l. 1. 1. 1 etc. — $^b$) B Da $D_{2.4}$ सत्रं समासते.

2 $^{ab}$) $Ko_{.1.4}$ Ñ$_{2.3}$ $B_{1.3.6}$ Dn $D_2$ $G_{3.5.6}$ $M_{6-8}$ कंचिद्. $Ko_{.3.4}$ इह; $B_5$ इव (for अपि). $K_1$ प्रजासु; Ñ$_{2.3}$ $B_{3.6}$ D (except $D_{4.5}$) $G_1$ प्रजानां; $T_3$ $G_4$ प्रजा हि. Ñ$_1$ ततो यमो दीक्षितोत्र राजन्नामारयत्प्रजाः (anuṣṭubh !). — $^d$) $K_4$ कालोपि यातो. $Ko_{.3.4}$ N B D $G_1$ मरणप्रहीणाः. — For 2, $V_1$ subst. a (fragm.) anuṣṭubh stanza:

1913* स तत्र दीक्षितस्तात यमो नामारयत्प्रजाः ।
प्राणिनोऽथ न मृताश्च * * * * * * * * ।

3 $^a$) Ñ$_{2.3}$ $V_1$ B D सोमश्च ($D_5$ °स्तु); S (except $M_{3.5}$) ततश्च. — $^b$) $V_1$ साध्यादित्या. $K_{2.3}$ Ñ $V_1$ B D $T_1$ वसवोथाश्वि°. — $^c$) Ñ$_2$ $B_{3.6}$ Da $Dn_3$ $D_{1.2}$ प्रजापतिर्भुवनस्य प्रणेता.

4 $^b$) Ñ$_1$ $B_{1.5}$ भयं तीव्रं; Ñ$_{2.3}$ $V_1$ $B_{3.6}$ D (except $D_5$) भयात्तीव्रान्. $K_1$ S प्रवृध्या. — $^c$) Ś$_1$ सर्वे स्म (m as in text); $K_2$ सुखेच्छाः; $D_5$ स्म सर्वे (for सुखे°). — $^d$) Ś$_1$ $K_{1.2}$ इयाम; $Ko_{.3.4}$ याताः स्म; $D_5$ व्रजाम; $G_1$ भजाम (for प्रयाम). $G_1$ भजंतः (for भवन्तम्). Ñ$_1$ व्रजाम भो परेशं वै भवंतं.

5 N पितामह उ° (Ś$_1$ $K_1$ om. उ°). S ब्रह्मा ($G_{3.6}$ om. the ref.). — $G_2$ (hapl.) om. 5–6. — $^b$) Ś$_1$ सदामराः. — $^c$) $K_2$ Ñ$_1$ S ($G_2$ om.; $G_3$ before corr.) न (for मा). — $^d$) S ($G_2$ om.) भवति. $V_1$ कुत्रचित्. Ś$_1$ K N Dn $D_{1.2.5}$ भयं भवितुमर्हति.

6 $G_2$ om. 6 (cf. v. l. 5). Ś$_1$ $K_1$ S om. ऊचुः. — $^a$) $K_2$ मर्तव्यमर्त्याः; Ñ$_{2.3}$ $V_1$ B D (except $D_5$) मर्त्या अमर्त्याः. Ś$_1$ संपन्ना; $K_2$ $B_3$ $D_2$ °भूता; Da °जाता. — $^b$) Ñ$_3$ $V_1$ $B_5$ विशेषो नास्ति (by transp.). — $^d$) $B_{3.5}$ Da $D_{2.4}$ उपागताः. $B_6$ विषादं समुपागताः.

7 Ś$_1$ $K_{1-3}$ Ñ $B_{3.5.6}$ D भगवानुवाच; $Ko_{.4}$ $V_1$ $B_1$ पितामह उ°; S ब्रह्मा. — $^b$) $Ko_{.3.4}$ तस्मात्त्विमे. — $^c$) $T_3$ $G_4$ तस्मिन्हि कार्ये (sic). $D_5$ कृतसत्र°. — $^d$) Ś$_1$ $T_1$

C. 1. 7281
B. 1. 197. 7
K. 1. 214. 7

तस्मिन्नेकाग्रे कृतसर्वकार्ये
तत एषां भवितैवान्तकालः ॥ ७
वैवस्वतस्यापि तनुर्विभूता
वीर्येण युष्माकमुत प्रयुक्ता ।
सैषामन्तो भविता ह्यन्तकाले
तनुर्हि वीर्यं भविता नरेषु ॥ ८

व्यास उवाच ।

ततस्तु ते पूर्वजदेववाक्यं
श्रुत्वा देवा यत्र देवा यजन्ते ।
समासीनास्ते समेता महाबला
भागीरथ्यां ददृशुः पुण्डरीकम् ॥ ९
दृष्ट्वा च तद्विस्मितास्ते बभूवु-
स्तेषामिन्द्रस्तत्र शूरो जगाम ।
सोऽपश्यद्योषामथ पावकप्रभां
यत्र गङ्गा सततं संप्रसूता ॥ १०
सा तत्र योषा रुदती जलार्थिनी
गङ्गां देवीं व्यवगाह्यावतिष्ठत् ।
तस्याश्रुबिन्दुः पतितो जले वै
तत्पद्ममासीदथ तत्र काञ्चनम् ॥ ११
तदद्भुतं प्रेक्ष्य वज्री तदानी-
मपृच्छत्तां योषितमन्तिकाद्वै ।
का त्वं कथं रोदिषि कस्य हेतो-
र्वाक्यं तथ्यं कामयेह ब्रवीहि ॥ १२

स्त्र्युवाच ।

त्वं वेत्स्यसे मामिह यासि शक्र
यदर्थं चाहं रोदिमि मन्दभाग्या ।
आगच्छ राजन्पुरतोऽहं गमिष्ये
द्रष्टासि तद्रोदिमि यत्कृतेऽहम् ॥ १३

---

M6–8 तत एवैषां; K2 G3 ततस्तेषां; Ñ1 तत्र एषां; B5 तत्तु एषां; T3 G4 तं चैतेषां; G5 ततश्चैतेषां. K2 Ñ3 B Da D2.4 भविता ह्यंतकालः; K3 Ñ1 भवितांत°; K4 भवितेति कालः; G1 भवितैषांत°.

8 a) K2 Ñ V1 B D S एव (T1 इह) (for अपि). K1 हि भूता; K3 Ñ1.3 B1m.3.5 Dn1 D1 विभूषिता; Ñ2 B1.6 Da Dn2.n3 D2.4.5 विभक्ता; V1 प्रयुक्ता; S हि भूत्वा (for विभूता). — b) V1 अंशेन (for वीर्येण). Ś1 K0.3.4 Ñ1 इति-; K1 अति-; K2 D1 T1 अनु- (for उत). Ś1m K1 Ñ2.3 B (except B6) D °वृद्धा; Ñ1 °वृत्ता; V1 °भूता (for °युक्ता). — c) G2 यमो; M5 ह्यंतो. Ś1 K1 रुषिता (for भविता). K2 सत्रकाले. — d) K2.3 Ñ2.3 V1 B D (D4 by corr.) न तत्र (D1 तेनात्र); Ñ1 मेने हि (for तनुर्हि). K1 भवितामरेषु; K3 भविता वै न°. S नियच्छध्वं मोहममित्रसाहाः.

9 Ś1 K1 S om. उवाच (T3 G2–4.6 M3 om. the ref.). — a) B5.6 Da D2.4 च (for तु). B3 तत् (for ते). Ś1 T3 G3.4 पूर्वजं; Ñ1 पूर्वजा; G1 पूजयन्. — b) N2.3 Dn S जग्मुर् (M6–8 गता) (for the first देवा). — c) G3 समवेता. K3 महांतो. K2 °सीनास्तेपि महाबलाय. — d) B3 भीमरथ्यां (m as in text).

10 b) Ñ1.3 B (except B6) D2 वीरो; B3m Cd शूरो (as in text). — c) D5 पावकाभां. K3 योषामपश्यत्स च पावकाभां. — d) D5 गंगा यत्र (by transp.). S वै प्रभूता (for संप्र°). K0 संप्रसूता सततं यत्र गंगा; K2.4 Ñ2.3 V1 B1.3.5 Dn D1.4 Arjp यत्र देवी गंगा सततं प्रसू(B1.3 संप्रसू-; D4 प्रभू)ता; B6 Da D2 सा तत्र देवी सततं बभूव.

11 a) K3 जलांतर्; T1 जलार्थी; G1 जलांतरे. — b) Ś1 व्यवगाढावतिष्ठत्; K0.4 अवगाह्यावति°; K1 Ñ V1 B Da1 Dn व्य(Ñ1 चा-; V1 अ)वगाह्य व्यति°; K2 विगाह्यावति°; D1 व्यवगाह्य ति°. — c) K1 V1 B3 Da T G (except G1.6) तद्(T3 °दा)श्रु°. K2 Ñ2.3 V1 B D M3 जले यस्.

12 a) K2 शुभे; K2m Ñ2.3 V1 B D (except D5) भद्रे; S कुतो (for कथं). — d) Ś1 K2–4 Ñ V1 B1.3.5 D (except Da2 D1) T3 G (except G2) कामयेहं; K1 °यैतद्; T1 °ये प्र-. V1 B3 D1.2 G1 ब्रवीम्मि; D5 °षि. B6 D4 ब्रूहि वरांगने त्वं (for कामयेह ब्र°).

13 S (but not Ś1 K1!) om. उवाच. — a) V1 त्वं पृच्छसे. — b) Ś1 K0.1.3 V1 वा; K4 वै (for चाहं). T3 G3–5 M मंदभागा. — c) V1 त्वरितो (for पुरतो). N (except Ñ1) G2 om. अहं. — d) Ś1 K0.1.4 Da D5 T G3.4 यद् (for तद्). Ś1 K (except K2) Ñ1 D5 यस्य हेतोः; Da तत्कृतेहं (Da1 °ते ह).

14 Ś1 K1 S om. उवाच. — c) Ñ2.3 V1 B1.6 D (except Da1 D1) सिद्धासनस्थं. — d) G1.6 (*sup. lin.*) क्रीडंतमैक्षद्.

15 b) K2 विद्धीह विश्वं. Ñ2.3 Dn1.n2 D1 विद्धन्; Cd

व्यास उवाच ।

तां गच्छन्तीमन्वगच्छत्तदानीं
सोऽपश्यदाराचरुणं दर्शनीयम् ।
सिंहासनस्थं युवतीसहायं
क्रीडन्तमक्षैर्गिरिराजमूर्ध्नि ॥ १४
तमब्रवीद्देवराजो ममेदं
त्वं विद्धि विश्वं भुवनं वशे स्थितम् ।
ईशोऽहमस्मीति समन्युरब्रवी-
द्दृष्ट्वा तमक्षैः सुभृशं प्रमत्तम् ॥ १५
क्रुद्धं तु शक्रं प्रसमीक्ष्य देवो
जहास शक्रं च शनैरुदैक्षत ।
संस्तम्भितोऽभूदथ देवराज-
स्तेनेक्षितः स्थाणुरिवावतस्थे ॥ १६
यदा तु पर्याप्तमिहास्य क्रीडया
तदा देवीं रुदतीं तामुवाच ।
आनीयतामेष यतोऽहमारा-
न्मैनं दर्पः पुनरप्याविशेत ॥ १७
ततः शक्रः स्पृष्टमात्रस्तया तु
स्रस्तैरङ्गैः पतितोऽभूद्धरण्याम् ।
तमब्रवीद्भगवानुग्रतेजा
मैवं पुनः शक्र कृथाः कथंचित् ॥ १८
विवर्तयैनं च महाद्रिराजं
बलं च वीर्यं च तवाप्रमेयम् ।
विवृत्य चैवाविश मध्यमस्य
यत्रासते त्वद्विधाः सूर्यभासः ॥ १९
स तद्विवृत्य शिखरं महागिरे-
स्तुल्यद्युतींश्चतुरोऽन्यान्ददर्श ।
स तानभिप्रेक्ष्य बभूव दुःखितः
कच्चिन्नाहं भविता वै यथेमे ॥ २०
ततो देवो गिरिशो वज्रपाणिं
विवृत्य नेत्रे कुपितोऽभ्युवाच ।
दरीमेतां प्रविश त्वं शतक्रतो
यन्मां बाल्यादवमंस्थाः पुरस्तात् ॥ २१
उक्तस्त्वेवं विभुना देवराजः
प्रवेपमानो भृशमेवाभिषङ्गात् ।
स्रस्तैरङ्गैरनिलेनेव नुन्न-
मश्वत्थपत्रं गिरिराजमूर्ध्नि ॥ २२
स प्राञ्जलिर्विनतेनाननेन C. 1. 7298 B. 1. 197. 23 K. 1. 214. 23

विश्वं (as in text). K3.4 वशे स्थितं भुवनं विद्धि सर्वं. — d) Ñ1 समक्षैस्तु भृशं; Da D2.4.5 M5 तमक्षेषु भृशं. Ś1 प्रदीवितं; K (except K2) Ñ1 D5 प्रसक्तं.

16 a) Ko Ñ2.3 V1 B D च; Ñ1 S (except M3.5) स (G2 सु-) (for तु). — b) Ñ1 D5 शनकैर् (for च शनैर्). Ś1 K Ñ1 D5 G6 उदीक्ष्य; B6 D4 उदैक्षत्. — c) K4 G3 स स्तंभितो.

17 a) Ś1 Ko.1.4 च (for तु). Ś1 पर्याप्तिम्; Ko N1 S (except G4) पर्याप्तिर्; Cd as in text. Ś1 Ko.1 इवास्य क्रीडया (Ko दीव्यतः); S (except G4) इवा(T3 इहा)क्षक्रीडया (G1 °क्षविक्रियायां; G2 °क्षक्रीडावान्; G6 °क्षक्रीडायां; M °क्षक्रीडायास्) (for इहास्य क्री°). — b) Ś1 K (except K2) Ñ1 तदा स (Ñ1 तु) देवीं. G5 कुमतीं (for रुदतीं). M3.5 तामवोचत्. — c) T G2-6 ततोम(T1 G5.6 °ह)मारान्; G1 यमोहमारान्. — d) Ś1 K1 Ñ1 D1 G1 मैवं; Ñ2.3 Dn T1 M3.6 नैनं. Ś1 K1 Ñ1 पुनरस्यावि°; K4 पुनरेवावि°; B5 पुनरावि°; D4.5 पुनरभ्यावि°; T1 °विशेद्दै; G1 पुनराविवेश; G2 पुनरप्याविवेश.

18 a) S तदा. K4m दृष्टमात्रस्तु तेन. — c) K2 D2 ततोब्रवीद्. Ñ3 उग्रकर्मा. — d) T3 G3 जातु (for शक्र).

19 a) K4 Ñ2 V1 B5 Dn D2.4.5 निवर्तय; Cd as in text. V1 B (except B1) Da1 D4 एतं.. K2 महेंद्रराजं. — b) Dn1.n2 D1 तथाप्र°; G1 तदाप्र°. — c) K2 Ñ2.3 V1 B D छिद्रस्य (for विवृत्य). T3 G4 च त्वं विश. Ś1 (by corr.) K1 चैवावगमय्य सम्यग्.

20 a) K2.3 Ñ2.3 V1 B D (except D2) विवरं (for शिखरं). — b) S om. अन्यान्. — c) Ñ1 D5 अभिज्ञाय ब°. — d) S (except M5) कथं नाहं.

21 b) T1 G6 रुषितोभ्युवाच. — c) T1 दरीं गिरेस्तां. — d) K1 G1 M3.5 यन्मा; G2 यदा; M6-8 यस्माद्.

22 b) K Ñ V1 B1.5 Da Dn D1.2.4 M3 प्रा(Da Dn1 प्र)वेपनार्तो (K1 प्रवेपन्नार्तो); B3.6 D5 M5 प्रवेपि(B3 D5 °प)तांगो. — c) K2 D2.4 G1 अनिलेनैव; D1 T3 G4 अनिलैरेव. — d) D1.4 अश्वत्थपर्णं. B5.6 Da M6-8 °मूर्धनि.

C. 1. 7298
B. 1. 197. 23
K. 1. 214. 23

प्रवेपमानः सहसैवमुक्तः ।
उवाच चेदं बहुरूपमुग्रं
द्रष्टा शेषस्य भगवंस्त्वं भवाद्य ॥ २३
तमब्रवीदुग्रधन्वा प्रहस्य
नैवंशीलाः शेषमिहाप्नुवन्ति ।
एतेऽप्येवं भवितारः पुरस्ता-
त्तस्मादेतां दरिमाविश्य शेध्वम् ॥ २४
शेषोऽप्येवं भविता वो न संशयो
योनिं सर्वे मानुषीमाविशध्वम् ।
तत्र यूयं कर्म कृत्वाविषह्यं
बहूनन्यान्निधनं प्रापयित्वा ॥ २५
आगन्तारः पुनरेवेन्द्रलोकं
स्वकर्मणा पूर्वजितं महार्हम् ।
सर्वं मया भाषितमेतदेवं
कर्तव्यमन्यद्विविधार्थवच्च ॥ २६
पूर्वेन्द्रा ऊचुः ।
गमिष्यामो मानुषं देवलोका-
द्दुराधरो विहितो यत्र मोक्षः ।
देवास्त्वस्मानादधीरञ्जनन्यां
धर्मो वायुर्मघवानश्विनौ च ॥ २७
व्यास उवाच ।
एतच्छ्रुत्वा वज्रपाणिर्वचस्तु
देवश्रेष्ठं पुनरेवेदमाह ।
वीर्येणाहं पुरुषं कार्यहेतो-

---

23 a) Ś1 लिर्गतेन; Ś1m K1 निष्प्रभेन; K0 विगतेन (for विनतेन). K2 आननैक्षत्. Ñ2.3 V1 D (except D1.4) °लिवैं वृषवाहनेन. — c) Ñ B1 D (except D1.2.4) T1 G1 M देवं (for चेदं). K3 °रूपं तमुग्रं. — d) K2 द्दष्टा; K3 स्रष्टा; K4 द्रष्टासि; B6 S (except M5) दृष्ट्वा (for द्रष्टा). Ñ2 Dn3 अद्याशेषस्य (for द्रष्टा शे°). S शेषं (for शेषस्य). Ñ V1 B D भुवनस्य (for भगवन्). Ñ V1 B Dn1.n3 D2.5 भवाद्यः; T1 G1.2.5.6 प्रसीद; T3 G3.4 प्रयच्छ. Cd द्रष्टाशेषस्य (=सर्वज्ञः). — Cf. Winternitz, *JRAS*. 1897. 743 (and footnote 2).

24 a) Ñ1.2 Dn D1 Cd उग्रवर्चाः. — b) Ñ1 S नै(Ñ1 ए)वंविधाः; Cd as in text. K0.4 क्लेशम्; K1 श्रेष्ठम्; D5 श्रेयः (for शेषम्). K2 D5 इव; G6 अव- (for इह). K3 °शीलाः क्लेशभाजो भवंति. — c) T3 G4 भवतः पुरस्तात्; G2 भगवन्वै पुर°. — d) D4 om. तस्माद्; B3.6 om. एतां. K4 Ñ1 एनां; D5 एतां त्वं; S एते (G6 एनद्) (for एतां). Ś1 K1 D1.5 आविशध्वं (D5 °स्व); K0 आविशेष; K2.4 आविश्यसेद्य (K4 °से त्वं); K3 Ñ2.3 B1.5m Dn आविश्य शेष्व; Ñ1 एवाविशाद्य; V1 B5 आविश्य तिष्ठ; B3 आविश्येह शेष्व; B3m.6 Da D4 आविशान्नैव शेष्व; D2 आविशेष्वेवं; S एनां प्रविष्टाः.

25 a) K0.3.4 Da D2 शेषा (Da1 D2 °षो) ह्येवं; Ñ V1 B (B3 marg.) Dn D1 तत्र ह्येवं (B3 orig. शेषाप्येवं); D4 (by corr.) S एषा भार्या. K4 Ñ V1 B Dn D1.2 भवितारो न. Ś1 K1 नैव (for वो न). K2 तामसंशयं. — b) S °षीं संविश°. — c) K2 तत्ते; T1 तत्रापि (for तत्र). — d) T3 G3.4 बहूनां राज्ञां; G1.2.5 बहूनस्यां; G6 भूभारस्य. K2 V1 B (except B6) D2 प्राप्य चैव. — After 25, D4 (marg. *sec. m.*) S ins.:

1914* शस्त्रैर्दिव्यैर्मानुषान्योधयित्वा
शूरान्सर्वानाहवे तान्विजित्य ।

26 b) K3 वै पूर्वजितं; S पूज्यमाना. Ś1 K1 M3 महार्हाः; K0.3.4 वै यथार्हं; M5 यथार्हं. — c) K1.3 Ñ1 D5 सर्वं मया भाषिता. Ś1 एवमेव; K0.3.4 B6 Da D3.4.5 G3 M (except M3) एतदेव; K1 एव देव; Ñ1 तत्र देव. — d) K2 B5 D4 एतद्; B6 Da एवं; G2 अन्यं. K3 N2.3 V1 B D °र्थयुक्तं.

27 Ś1 S om. ऊचुः. — a) T1 नरकं (for मानुषं). K2 D1.2 देवलोकं; V1 °रूपं. B6 देवलोकान्नृलोकं; Da (corrupt) देवलोकादन्यलोकं (both om. मानुषं). — b) K1 परावरो; K2 Dn1 दुराधारो; B5 °राधो; S °वा(M3.6–8 °व)रो; Cd as in text. T3 G3–5 निहितो. Ñ1 यश्च लोकः; D5 यत्र धर्मः. — c) Ś1 K M7 तस्माद्; G2 अस्मान्. — d) Ś1 K1 भगवानश्विनौ च. — After 27, K4 Ñ V1 B D G1 ins.:

1915* अस्त्रैर्दिव्यैर्मानुषान्योधयित्वा
आगन्तारः पुनरेवेन्द्रलोकम् ।
[ Cf. 1914*. ]

28 Ś1 K1 S om. उवाच. — a) Da2 G1 (by corr.) वज्रपाणेर्; T1 यज्ञपाणेर्. — b) G1 एतद् (for इदम्). — c) Ś1 K (except K2) Ñ1 D5 Cd पुरुषं कर्महेतोर्; B6 Da D2 कर्महेतोर्मनुष्यं. — d) K0.3.4 दास्याम्येषां; K2 Ñ1.3 B6 D2.4 ददाम्येषां. Ś1 D1 पंचमस्. Ś1 K1 तत्प्रसूतां (K1 °तं); D1 मत्प्रसूतः. — After 28, N ins. (a

देह्यामेषां पञ्चमं मत्प्रसूतम् ॥ २८

तेषां कामं भगवानुग्रधन्वा
प्रादादिष्टं सन्निसर्गाद्यथोक्तम् ।
तां चाप्येषां योषितं लोककान्तां
श्रियं भार्यां व्यदधान्मानुषेषु ॥ २९

तैरेव सार्धं तु ततः स देवो
जगाम नारायणमप्रमेयम् ।
स चापि तद्व्यदधात्सर्वमेव
ततः सर्वे संबभूवुर्धरण्याम् ॥ ३०

स चापि केशौ हरिरुद्बबर्ह
शुक्लमेकमपरं चापि कृष्णम् ।
तौ चापि केशौ विशतां यदूनां
कुले स्त्रियौ रोहिणीं देवकीं च ।
तयोरेको बलदेवो बभूव
कृष्णो द्वितीयः केशवः संबभूव ॥ ३१

ये ते पूर्वं शक्ररूपा निरुद्धा-
स्तस्यां दर्यां पर्वतस्योत्तरस्य ।
इहैव ते पाण्डवा वीर्यवन्तः
शक्रस्यांशः पाण्डवः सव्यसाची ॥ ३२

एवमेते पाण्डवाः संबभूवु-
र्ये ते राजन्पूर्वमिन्द्रा बभूवुः ।
लक्ष्मीश्चैषां पूर्वमेवोपदिष्टा
भार्या यैषा द्रौपदी दिव्यरूपा ॥ ३३

कथं हि स्त्री कर्मणोऽन्ते महीतला-
त्समुत्तिष्ठेदन्यतो दैवयोगात् ।
यस्या रूपं सोमसूर्यप्रकाशं
गन्धश्चाग्र्यः क्रोशमात्रात्प्रवाति ॥ ३४

इदं चान्यत्प्रीतिपूर्वं नरेन्द्र C. 1. 7312 B. 1. 197. 37 K. 1. 214. 37

---

s'loka!):

1916* विश्वभुगृतधामा च शिबिरिन्द्रः प्रतापवान् ।
शान्तिश्चतुर्थस्तेषां वै तेजस्वी पञ्चमः स्मृतः ।

[ (L. 1) Ś1 K1 V1 घृतधामा; K0 क्रतु°; K3 Ñ2 Dn D4.5 भूत°; Ñ1.3 B3 D1 घृत°. K2 शुचिरिंद्रः. ]

29 Before 29, D5 ins. व्यास उ°; G5 व्यासः. — a) T1 तेषां कर्म. S उग्रकर्मा; Cd as in text. — b) K1.3 स निसर्गाद्; Ñ1 स विस°; B3 D2 सन्नियोगाद् (B3m °संगाद्); D4 संविस°; G2 सन्निसर्गं. — c) Da D4 तां चाप्येनां. D2 लोककर्ता. — d) Ñ1 श्रियं देवीं. K4 विदधन्; G6 विदधान्; M5 आददान्. M6–8 मानवेषु. — After 29, T1 ins. 1918*.

30 After $30^{ab}$, K4 Ñ2.3 V1 Dn D1.4 (marg. *sec. m.*) ins.:

1917* अनन्तमव्यक्तमजं पुराणं
सनातनं विश्वमनन्तरूपम् ।

— S ins. after 30 (T1, after 29):

1918* नरं तु देवं विबुधप्रधान-
मिन्द्रो जिष्णुं पञ्चमं कल्पयित्वा ।

31 a) M3.5 द्वौ चापि. G2 (hapl.) om. from हरिर् up to केशौ (in c). G5 हरिरुद्बहृत्सदात्. — b) K0.3.4 T1 शुक्लं चैकम्. K2 Ñ3 B Da D2.4 एकं कृष्णमपरं चैव शुक्लं. — c) Ś1 K Ñ1 आ(K2 निर्)विशेतां; Ñ2.3 V1 B D निविशेतां; G1 विहितां. — d) S कुलस्त्रियौ. K2 Ñ V1 B D M5 देवकीं रोहिणीं (by transp.). — e) S (except T3 G4) तयोः श्वेतो. T1 बलभद्रो. — N ins. after $31^{e}$:

1919* योऽसौ श्वेतस्तस्य देवस्य केशः ।;

and after $31^{f}$:

1920* केशो योऽसौ वर्णतः कृष्ण उक्तः ।

32 a) S (except G3.5.6) एते पूर्वं. K0 इंद्रभूता निरुद्धाः. K1 Ñ2.3 V1 Dn1.n2 D1 निबद्धाः. — b) S उत्तम° (for उत्तर°). — c) K1.2 B5.6 Da D1.2.4 G2.6 एते (for ते). — T3 G4 (hapl.) om. from वीर्य° up to पांडवाः (in $33^{a}$).

33 T3 G4 om. up to पांडवाः. (cf. V.1. 32). — b) K4 T1 G2.6 M एते राजन्. — c) M6–8 लक्ष्मीश्चैवं. — d) K0 Ñ1 B3.6 D2 T G1–4 M6–8 चैषा; K2.4 B5 D5 G5.6 चैषां; M3 कृष्णा. M5 व्यक्तरूपा.

34 a) K0 D1 T3 G om. हि. K3 Ñ2.3 B1 Da कर्मणा ते; Ñ1 धर्मणोंते; M6–8 कर्मतोंते. — b) Ś1 देवलोकात् (m दैवयोगात् as in text). — d) Ś1 Ñ2 B5 Dn3 D4.5 T3 G3–5 M (except M5) गंधश्चास्याः; G1 गंधं चाग्र्यं; G2 °श्चाग्र्यं; G6 श्च यः. K2 क्रोशमंगात्; D2.4 T3 G2.3.5 °मात्रं; T1 G6 °मस्याः. Ś1 Ñ3 T3 G3(*inf. lin.* as in text).4 प्रयाति; K2 प्रभावात्.

35 a) Ś1 K (except K2) D5 चाहं; Ñ1 त्वहं; T1 चान्यं. — b) Ś1 K0.3 Ñ V1 B1 Dn D1 T G (except G3.6) M6–8 ददानि. Ś1 K (except K2) D5 वै; Ñ1 मे

C. 1. 7812
B. 1. 197. 37
K. 1. 214. 37

ददामि ते वरमत्यद्भुतं च ।
दिव्यं चक्षुः पश्य कुन्तीसुतांस्त्वं
पुण्यैर्दिव्यैः पूर्वदेहैरुपेतान् ॥ ३५
वैशंपायन उवाच ।
ततो व्यासः परमोदारकर्मा
शुचिर्विप्रस्तपसा तस्य राज्ञः ।
चक्षुर्दिव्यं प्रददौ तान्स सर्वा-
न्राजापश्यत्पूर्वदेहैर्यथावत् ॥ ३६
ततो दिव्यान्हेमकिरीटमालिनः
शक्रप्रख्यान्पावकादित्यवर्णान् ।
बद्धापीडांश्चारुरूपांश्च यूनो
व्यूढोरस्कांस्तालमात्रान्ददर्श ॥ ३७
दिव्यैर्वस्त्रैररजोभिः सुवर्णै-
र्माल्यैश्चाग्र्यैः शोभमानानतीव ।
साक्षात्त्र्यक्षान्वसवो वाथ दिव्या-
नादित्यान्वा सर्वगुणोपपन्नान् ।
तान्पूर्वेन्द्रानेवमीक्ष्याभिरूपा-
न्प्रीतो राजा द्रुपदो विस्मितश्च ॥ ३८
दिव्यां मायां तामवाप्याप्रमेयां
तां चैवाग्र्यां श्रियमिव रूपिणीं च ।
योग्यां तेषां रूपतेजोयशोभिः
पत्नीमृद्धां दृष्टवान्पार्थिवेन्द्रः ॥ ३९
स तद्दृष्ट्वा महदाश्चर्यरूपं
जग्राह पादौ सत्यवत्याः सुतस्य ।
नैतच्चित्रं परमर्षे त्वयीति
प्रसन्नचेताः स उवाच चैनम् ॥ ४०

---

(for ते). Ś1 Ko.1.4 Ñ1 D5 तुभ्यम्; K2.3 Dn1.n3 S (except G5.6) दिव्यम्; D4 रूपम् (for वरम्). — c) G5 °सुतांश्च; M6-8 °सुतांस्तान्. — d) K1 पुण्यैर्देहैः. Ś1 पूर्वरूपैर्; B3 (m as in text).5 Da पुण्यदेहैर्.

36 Ś1 K D2 S om. उवाच (K3 T3 G1-4 om. the ref.). — b) M5 शुचिर्दिव्यस्. — c) Ko.2 N V1 B D तांश्च (D5 °स्तु); K3.4 तान् (om. स); S तेन. — d) T G M3 उपेतान् (M3 inf. lin. as in text); M6-8 यदावत्.

37 b) Ś1 K1 D1 शक्रप्रमुख्यान् (D1 °खान्); G2 शरप्रमुख्यान्. Ś1 मुदितस्तान्ददर्श; K1 पंच चैवेंद्रकल्पान्; M5 पावकदीप्तवर्णान्; M6-8 भुवि चादित्यव°. — c) Ñ1 चंद्रापीडान्. K4 चातिरूपांश्च; D5 चानुरूपांश्च. — d) T G साल° (for ताल°). Ñ1 °स्कांस्तानपश्यन्महेंद्रान्.

38 a) Ñ1 Da1 Dn1 G1 अस्त्रैर्; T3 G2-4 वर्णैर् (for वस्त्रैर्). Ñ1 V1 विरजोभिः; G2 न रजोभिः. K2 Ñ2.3 V1 B D सुगंधैर्. — b) Dn D4 माल्यैश्चोग्रैः. — c) K2 G1.2 यक्षान्; T1 प्रेक्षान् (for °त्र्यक्षान्). Ś1 वापि (for वाथ). K2 Ñ1 तान् (Ñ1 वा) वसूंश्चापि दिव्यान्; K3 वा वसून्वाथ दिव्यान्; N2.3 V1 B D वा (D5 om. वा) वसूंश्चा(B1.5 °सून्वा)पि रुद्रान्; T G M5 वासवान्वाथ दिव्यान्; M3.6-8 वासवा(M3 वा वसू)न्दिव्यरूपान्. — d) Ś1 आदित्यान्वै; B6 Da D2 अ(D2 त)थादित्यान्. — e) T3 G3-6 पूर्वेंद्रांस्तान् (by transp.); G2 पूर्वानिंद्रान्. Ś1 K1 D5 समवेक्ष्य; Ko.3.4 प्रसमी°; K2 स समी°; Ñ2.3 B Da Dn D1.2.4 अभिवी° (for एवमीक्ष्य). Ś1 अभिपूर्णान्; D4 अनुरूपान्. Ñ1 तान्सर्वान्समालक्ष्याभिरूपान्; V1 तान्पूर्वेंद्रानेष पूर्वाभि°. — After 38e, N ins.:

1921* शक्रात्मजं चेन्द्ररूपं निशम्य ।

[ See below. — K2 B Da D2.4 °त्मजं चापि निरीक्ष्य पार्थं. ]

— M5 (? hapl.) om. from 38f up to 40a.

39 M5 om. 39 (cf. v. l. 38). — a) Ś1 K1 दिष्टां मायां. Ś1 K1.4 तां समीक्ष्य; Ko.3 प्रसमीक्ष्य; K2 Ñ V1 B D G1 तामवेक्ष्य. — b) K2 तथैवाग्र्यां; B3 तां वै चाग्र्यां. K2 Ñ2.3 V1 B (except B3) D (except Dn) स्त्रियम् (for श्रियम्). Ś1 K Ñ1 V1 B Da D2.4.5 अभि(Ko.2-4 B6 D2.4.5 °ति)रूपजुष्टां; Dn D1 अति(D1 °भि)रूपयुक्तां. — After 39ab, N ins.:

1922* दिव्यां साक्षात्सोमवह्निप्रकाशां ।

[ See above. K2 सोमरूपप्र°; Dn3 सोमसूर्यप्र°. ]

— d) K3 सृष्टां; K4 इष्टां; Ñ2 B1 Dn D1 मत्वा (for ऋद्धां). K3 पत्नीं दृष्ट्वा पृष्टवान्पा°.

40 M5 om. 40a (cf. v. l. 38). — a) K4 V1 D1.2 तं; S (M5 om.) तान् (for तद्). Ś1 K (except K2) परमाश्चर्य°; S (M5 om.) °रूपान्. — c) M5 नैकश्चित्रं. K4 G1 त्वयेति. — d) M3.5 तमुवाच चै°. — After 40, D4 (marg. sec. m.) S ins. an addl. colophon [ *Adhy. name:* S पंचेंद्रोपाख्यानं. — *Adhy. no.:* T1 198; T3 G3-6 150; G1 152; G2 149; M 151. — *S'loka no.:* M3 40 ]. After this colophon, D4 (marg. sec. m.) S ins. an (addl.) adhy. of 25 lines, given in App. I (No. 101).

व्यास उवाच ।
आसीत्तपोवने काचिदृषेः कन्या महात्मनः ।
नाध्यगच्छत्पतिं सा तु कन्या रूपवती सती ॥ ४१
तोषयामास तपसा सा किलोग्रेण शंकरम् ।
तामुवाचेश्वरः प्रीतो वृणु काममिति स्वयम् ॥ ४२
सैवमुक्ताब्रवीत्कन्या देवं वरदमीश्वरम् ।
पतिं सर्वगुणोपेतमिच्छामीति पुनः पुनः ॥ ४३
ददौ तस्यै स देवेशस्तं वरं प्रीतिमांस्तदा ।
पञ्च ते पतयः श्रेष्ठा भविष्यन्तीति शंकरः ॥ ४४
सा प्रसादयती देवमिदं भूयोऽभ्यभाषत ।
एकं पतिं गुणोपेतं त्वत्तोऽर्हामीति वै तदा ।
तां देवदेवः प्रीतात्मा पुनः प्राह शुभं वचः ॥ ४५
पञ्चकृत्वस्त्वया *उक्तः पतिं देहीत्यहं पुनः ।
तत्तथा भविता भद्रे तव तद्भद्रमस्तु ते ।
देहमन्यं गतायास्ते यथोक्तं तद्भविष्यति ॥ ४६
द्रुपदैषा हि सा जज्ञे सुता ते देवरूपिणी ।
पञ्चानां विहिता पत्नी कृष्णा पार्षत्यनिन्दिता ॥ ४७
स्वर्गश्रीः पाण्डवार्थाय समुत्पन्ना महामखे ।
सेह तप्त्वा तपो घोरं दुहितृत्वं तवागता ॥ ४८
सैषा देवी रुचिरा देवजुष्टा
पञ्चानामेका स्वकृतेन कर्मणा ।
सृष्टा स्वयं देवपत्नी स्वयंभुवा
श्रुत्वा राजन्द्रुपदेष्टं कुरुष्व ॥ ४९

C. 1. 7328
B. 1. 197. 59
K. 1. 214. 67

इति श्रीमहाभारते आदिपर्वणि एकोननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥ समाप्तं द्रौपदीस्वयंवरपर्व ॥

☞ St. 41–47 are a variant of 1. 157. 6–14.

41 $Ś_1$ $K_1$ S om. उवाच. — a) $K_2$ तपोधना का°. — c) S (except $M_{3.5}$) नाभ्यगच्छत्. $D_1$ सा वै; $T_3$ $G_{3.4}$ सापि.

42 b) $Da_1$ $Dn_3$ क्लिोग्रेण च शंकरं; $T_1$ $G_{1.5.6}$ M सा तु देवं महेश्वरं; $T_3$ $G_{2-4}$ प($G_2$ प्री)त्यर्थं त्रिपुरांतकं. — c) $T_3$ $G_{2-4}$ तामुवाच ततस्; $G_6$ तपसा चेश्वरस्. S तुष्टो (for प्रीतो). — d) $K_{0.3}$ स्मयन्; $K_2$ स्मरन्. S वृणीथाः काममीप्सितं.

43 ab) S अथेश्वरमुवाचेदमात्मनो यद्धितं ($T_1$ वर्धितं) वचः.

44 ab) $Ś_1$ $K_{1.3}$ $V_1$ च ($K_3$ स) तस्यै; $K_0$ तस्यैव; $Ñ_1$ च तस्या (for तस्यै स). $K_1$ तद्वरं. $K_0$ प्रीतिपूर्वकं; $K_2$ $Ñ_{2.3}$ B Dn $D_{1.2.4}$ प्रीतमानसः (for प्रीतिमां°). $K_{3.4}$ प्रीतिमांस्तद्वरं तदा. S एवमुक्तस्तदा देव इदं वचनमब्रवीत्. — c) $K_2$ $Ñ_{2.3}$ B D (except $D_5$) पतयो भद्रे. — d) S इत्युक्ता सा तु ($T_1$ $G_6$ सा च; $T_3$ $G_{3.4}$ साधु) भामिनी.

45 S om. 45. — a) $K_{3.4}$ प्रसादयंती सा देवम्. — c) $K_0$ पतिमेकं (by transp.); $D_1$ एवं पतिं. — d) $K_2$ $Ñ_{2.3}$ B D शंकर (for वै तदा). — e) $Ś_1$ $K_1$ तदैव देवः.

46 Before 46, $Ś_1$ ins. महादेवः; $K_1$ श्रीदेवदेवः; $V_1$ देवदेव उ°; $B_6$ देव उ°; $D_2$ महादेव उ°. — a) Cf. 1. 157. 13. $Ś_1$ $K_0$ M त्वयाप्युक्तः; $K_{1.3.4}$ त्वयास्म्युक्तः; $K_2$ त्वयैवोक्तः; $Ñ_1$ त्वया ह्युक्तः; $V_1$ त्वया प्रोक्तः; $Ñ_{2.3}$ B D त्वयोक्तोहं; T G त्वया चोक्तः (all avoiding the hiatus in different ways!). — b) $K_2$ $Ñ_{2.3}$ B D देहीति वै. S शुभे ($M_5$ पुनः also). — S om. 46$^{cd}$. — d) $Ñ_1$ तदेतद्; $Ñ_{2.3}$ $V_1$ Dn $D_{1.4}$ वचस्तद् (for तव तद्). — f) S वै (for तद्). $K_2$ भविष्यति न संशयः; $K_2$m $Ñ_{2.3}$ $V_1$ B D सर्वमेतद्भविष्यति. — After 46, $T_3$ $G_{2-4.6}$ ins. a passage of 32 lines given in App. I (No. 102).

47 Before 47, $K_2$ $V_1$ Da $Dn_3$ $D_{2.4.5}$ ins. व्यास उ°. $G_6$ om. 47$^{ab}$. — a) $B_1$m $D_4$ द्रौपद्येषा. S ($G_6$ om.) ततो. — b) $K_2$ $Ñ_{2.3}$ $B_6$ D (except $D_{2.5}$) वै (for ते). — c) S कृष्णा. — d) $B_5$ हृष्टा; S पुरा (for कृष्णा). $K_2$ कृष्णानिंद्या भविष्यति.

48 $T_3$ $G_4$ om. 48. — a) S ($T_3$ $G_4$ om.) स्वर्गाच्छ्रीः. $Ñ_{2.3}$ B D (except $D_5$) पांडवार्थं तु. $K_2$ द्रुपद श्रीः पांडवार्थं; $K_4$ स्वर्गलक्ष्मीः पांडवाय. — b) S ($T_3$ $G_4$ om.) तपोव($G_3$ °ध)ने. — c) $K_2$ $Ñ_{1.3}$ $V_1$ B (except $B_1$) Da $D_{2.4.5}$ सेयं; S ($T_3$ $G_4$ om.) सैव ($G_6$ सैतत्; $M_5$ सैवं). — d) $G_{2.3}$ दुहितात्वं. $K_3$ उपागता; S ($T_3$ $G_4$ om.) गता तव.

49 a) $G_4$ पापजुष्टा. $V_1$ सैषा पंचानां पांडवाना भवित्री. — b) $Ñ_1$ सु- (for स्व-). $K_3$ कर्मणा स्वेन राजन्; $Ñ_{2.3}$ $V_1$ B D स्व($B_{3.6}$ Da $D_4$ सु)कृतेनेह क°; T G स्वकृतेनैव क°. — c) S सृ($T_1$ द)ष्टा पूर्वं. $G_1$ स्वयं हि; $M_3$ स्वयं वा. — d) $K_2$ कुरु त्वं. — After 49, $K_4$ ins. a passage

१९०

C. 1. 7329
B. 1. 198. 1
K. 1. 215. 1

द्रुपद उवाच ।

अश्रुत्वैवं वचनं ते महर्षे
मया पूर्वं यतितं कार्यमेतत् ।
न वै शक्यं विहितस्यापयातुं
तदेवेदमुपपन्नं विधानम् ॥ १
दिष्टस्य ग्रन्थिरनिवर्तनीयः
स्वकर्मणा विहितं नेह किंचित् ।
कृतं निमित्तं हि वरैकहेतो-
स्तदेवेदमुपपन्नं बहूनाम् ॥ २
यथैव कृष्णोक्तवती पुरस्ता-
न्नैकान्पतीन्मे भगवान्ददातु ।
स चाप्येवं वरमित्यब्रवीत्तां
देवो हि वेद परमं यदत्र ॥ ३
यदि वायं विहितः शंकरेण
धर्मोऽधर्मो वा नात्र ममापराधः ।
गृह्णन्त्विमे विधिवत्पाणिमस्या

of 114 lines, comprising two adhyāyas, given in App. I (No. 100), which are ins. in S after adhy. 188.

Colophon om. in K4. — *Major parvan:* T3 G M संभव° (for आदि°). — *Sub-parvan:* K3 द्रौपदीविवाह; B1 Dn3 D5 द्रौपदीस्वयंवर; Dn1.n2 स्वयंवर; T1 संभव; to these K3 B1 Dn D5 add पंचेंद्रोपाख्यान. Ś1 K0–2 Ñ3 B3.5.6 Da D2.4 (all om. the sub-parvan name) mention only पंचेंद्रोपाख्यान. — *Adhy. no.* (figures, words or both): Dn3 196; D4m 203; D5 147; T1 200; T3 G4–6 152; G1.3 154; G2 151; M 153. — *S'loka no.*: Da 52; Dn 53; M3 8. — *Aggregate s'loka no.*: Dn2 7308.

## 190

1 Ś1 K1 S om. उवाच. — Ñ1 V1 B6 subst. for $1^{ab}$: Da Dn3 ins. before $1^{ab}$:

1923* श्रुत्वा वचस्तथ्यमिदं महार्थं
नष्टप्रमोहोऽस्मि महानुभाव ।

— a) Ś1 K0 अश्रुत्वैव; K2 श्रुत्वा त्वेदं; K3 अश्रुत्वैतद्; T3 G (except G1.5) श्रुत्वैवैवं. — b) T G2–4 यदिदं; G1 गदितं; G6 विदितं. K2 Ñ2.3 B1.3.5 D (except D5) संविधातुं (K2 °नं); S वर्जयित्वा. — c) K1 नैवं; Ñ1 D1 नैव; S न हि (for न वै). K2 Ñ2.3 V1 B Dn D1.2.4 विहितस्यापयानं; S °ताच्चापयातुं. — d) Ś1 K1 तदैवैतदुप°. Ñ1 B1 निधानं. Cf. $2^{d}$.

2 a) Ś1 K0.1.3 Ñ1 T1 अनुवर्त°; B1 न निवर्त°. — b) Ś1 चेह; K2 तत्र; K3 वेह; S चैव (M6–8 त्वेव). B6 कश्चित्; D5 कैश्चित्; M3 *inf. lin.* सर्वं. — c) Ñ3 कृतं प्रयत्नं. — d) K0.3.4 तथैवेदम्; G1 तदेवेनम्; M3.5 तदेव चेद्. K2 Ñ2.3 B1m.3.5 Dn D1 विधानं (for बहू°); cf. $1^{d}$

3 a) Ś1 K1 यदैव. — b) K2 नैकं पतिं मे; K3 एतान्पतीन्मा; G1 नैतान्पतीन्मे. Cd cites नैकान्. — c) M6–8 न (for स). B5 चाप्येनं; S चाप्येतद्. Ś1 K0.1.4 T1 परमित्यब्र°; B5 वरमब्र°; B6 वरमित्येवाब्र°. G5.6 M3 (*inf. lin.* as in text) तदा (for तां). — d) D2 ह; M3.5 अपि (for हि). Ñ2.3 V1 B1.5 Dn D1 वेत्ता; D2 वै (for वेद).

4 D1 reads 4 after 6. — a) B6 Da D2 यदै(Da °दे)वेदं. Ś1 वेयं; K (except K1) Ñ2.3 B1.3.5 Dn D1.4.5 चैवं; Ñ1 चेदं; V1 सारं; S त्वयं (M5 त्वियं) (for वायं). Ś1 K (except K1) विहिता; B6 Ñ1 V1 Da D2 °तं. — b) K1 मे (for वा). D5 om. वा. K0.3 वै मे; D5 मे वै (for मम). — c) S पांडवाः पाणिमस्या (T1 पाणिमस्या यथावद्). — d) Ñ1 D1 यथायोगं; S यथाजोषं (G1 °न्यायं; M5 as in text). Ś1 K1.4 Ñ1 विहितैषा. G1 विहितां हि कृष्णां. — After 4, K4 (marg.) D4 (marg. *sec. m.*) ins.:

1924* नायं विधिर्मानुषाणां विवाहे
देवा ह्येते द्रौपदी चापि लक्ष्मीः ।
प्राक्कर्मणः स्वकृतात्पञ्च भर्तॄ-
नवाप्येषा देवदेवप्रसादात् ।
नैषामेवायं विहितः सद्विवाहो
यद्भार्यैषा द्रौपदी पाण्डवानाम् ॥

K4 cont.:

1925* अन्येऽप्येवं स्युर्मनुष्याः स्त्रियश्च

यथोपजोषं विहितैषां हि कृष्णा ॥ ४

वैशंपायन उवाच ।

ततोऽब्रवीद्भगवान्धर्मराज-
मद्य पुण्याहमुत पाण्डवेय ।
अद्य पौष्यं योगमुपैति चन्द्रमाः
पाणिं कृष्णायास्त्वं गृहाणाद्य पूर्वम् ॥ ५

ततो राजा यज्ञसेनः सपुत्रो
जन्यार्थयुक्तं बहु तत्तदग्र्यम् ।
समानयामास सुतां च कृष्णा-
माप्लाव्य रत्नैर्बहुभिर्विभूष्य ॥ ६

ततः सर्वे सुहृदस्तत्र तस्य
समाजग्मुः सचिवा मन्त्रिणश्च ।
द्रष्टुं विवाहं परमप्रतीता
द्विजाश्च पौराश्च यथाप्रधानाः ॥ ७

ततस्य वेश्मार्थिजनोपशोभितं
विकीर्णपद्मोत्पलभूषिताजिरम् ।
महार्हरत्नौघविचित्रमाबभौ
दिवं यथा निर्मलतारकाचितम् ॥ ८

ततस्तु ते कौरवराजपुत्रा
विभूषिताः कुण्डलिनो युवानः ।
महार्हवस्त्रा वरचन्दनोक्षिताः
कृताभिषेकाः कृतमङ्गलक्रियाः ॥ ९

पुरोहितेनाग्निसमानवर्चसा
सहैव धौम्येन यथाविधि प्रभो ।
क्रमेण सर्वे विविशुश्च तत्सदो
महर्षभा गोष्ठमिवाभिनन्दिनः ॥ १० C. 1. 7338 B. 1. 198. 10 K. 1. 215. 15

---

न धर्मः स्यान्मानवोक्तो नरेन्द्र ।

5 Ś1 K (except K0) S om. उवाच. For S see below. — a) Ś1 भार्गवो धर्मं°. — b) K4 Ñ V1 B6 Dn D2.4 अद्यैव (for अद्य). K0 D5 उत्तमं; K2 Ñ V1 B6 Dn D4 उत वः; B5 शुभं वः (for उत). K0.4 Ñ2.3 V1 B5.6 Dn D4.5 पांडवेयाः. B1.3 Da D1.2 पुण्याहमद्यैव युधिष्ठिरेति. — c) Ś1 K4 V1 पुष्यं योगम्; K1 पुष्ययोगम्; K2 योगं पुष्यम्; Ñ1 पुष्ये योगम्. K2 Ñ1 चंद्रः. K0.3 पौष्यं योगं चाद्य चंद्रोभ्युपैति. Nilp पौष्पं (for पौष्यं). — d) K3 om. त्वं. Ñ1 D1 om. अद्य. B6 ब्राह्मो मुहूर्तश्च तथैव राजन्. — After 5, B5 ins.:

1926* पाणिं गृहाण प्रथमं त्वमस्याः
पाञ्चालराजस्य नरेन्द्र पुत्र्याः ।

S subst. for 5: D4 ins. after 1924*:

1927* तत आजग्मतुस्तत्र तौ कृष्णद्रुपदावुभौ ।
कुन्ती सपुत्रा यत्रास्ते धृष्टद्युम्नश्च पार्षतः ।
ततो द्वैपायनः कृष्णो युधिष्ठिरमथाब्रवीत् ।
अद्य पुण्यमहश्चन्द्रो रोहिण्या च समेष्यति ।
क्रमेण मनुजव्याघ्राः पाणिं गृह्णन्तु पाण्डवाः । [5]
द्रौपद्या धर्मतः सर्वे दृष्टमेतत्पुरानघ ।

[ (L. 5) G1.6 मनुजव्याघ्र. — (L. 6) G2-4 धर्मतश्चेमे. ]

6 b) Ś1 K1 ज्ञानार्थयुक्तं; Ñ2.3 V1 B1.5 Dn D2.4.5 जन्यार्थमुक्तं; T1 G2-4 M जन्यर्थयुक्तं; G1 कन्यार्थमुक्तं. Cd cites जन्यः (=जामाता). D5 बहुरत्नमग्र्यं; G5.6 M6-8 बहु तत्तदाग्र्यं. — c) B6 D2 संसज्जयामास; T G2-6 संभाव°; G1 M समर्थं°. — d) Ś1 K V1 आप्लुत्य; Ñ1 आसिच्य. Ś1 विभूत्या; K2 D2 विभूषितां (for विभूष्य). — After 6, D1 reads 4.

7 a) K3 Ñ2.3 B D (except D5) ततस्तु सर्वे सुहृदो नृपस्य. — b) K2 B3.6 D (except D5) सहिता; B1.5 मुदिता (for सचि°). — d) Ś1 K1 Ñ1 V1 B6 Da °प्रधानं; K3 °प्रवीराः.

8 a) K2 Ñ2.3 V1 B D G1.2 ततोस्य. Ś1 K0.1.3.4 Ñ1 D5 आर्थिजनोपपन्नं; K2 Ñ2.3 V1 B Da Dn D1.2.4 अग्र्य(K3 Da Dn3 °ग्र)जनो°. — b) Ś1 K1 °भूषितं नवं; Ñ1 विकीर्णपुष्पोत्करभू°; Ñ2.3 B6 Dn D5 विस्तीर्ण°; V1 प्रकीर्ण°; T3 G °शोभिताजिरं (G5.6 °तांघ्रिकं). — c) K2 Ñ2.3 V1 B D बलौघ; T3 G M3.5 बभूव; T1 M6-8 अनेक- (for महार्ह-). — d) Ś1 K2 Ñ V1 B D (except D5) नभो यथा. Ñ2.3 Dn2.n3 D5 T3 G3-6 °तारकान्वितं.

9 b) S सुवेषाः. — c) B6 °चंदनाक्ताः; Da °चंदनोक्ताः. Ś1 K (except K3) Ñ1 D5 महार्हमाल्यांबर°; Ñ2.3 V1 B1.3 Dn D1 °वस्त्रांबर°. — d) S °कौतुक°.

10 a) S °समान(G6 M °समेन)तेजसा. — b) Dn सदैव धौ°. S तथा यथा(G5 यथा तथा; M तदा यथा)विधि (G3 तथाविधिर्यथा). — c) K2 ततस्तदा; Ñ2.3 V1 B1.3 Dn D1.2 ततः सदो; B6 ततश्च तन्. — d) K3 मत्तर्षभा. K1 D5 °नंदिताः; K3 M6-8 °नंदितः; Ñ1.3 V1 B1 (m as in text) Dn3 D2 °नर्दिनः. K3 महर्षिसंजुष्टमतीव नंदिताः.

11 c) K3 अवनीय; Ñ1 B D2.4.5 G1.2 M5 अनु°; Da

# २१०

वैशंपायन उवाच ।
सोऽपरान्तेषु तीर्थानि पुण्यान्यायतनानि च ।
सर्वाण्येवानुपूर्व्येण जगामामितविक्रमः ॥ १
समुद्रे पश्चिमे यानि तीर्थान्यायतनानि च ।
तानि सर्वाणि गत्वा स प्रभासमुपजग्मिवान् ॥ २
प्रभासदेशं संप्राप्तं बीभत्सुमपराजितम् ।
तीर्थान्यनुचरन्तं च शुश्राव मधुसूदनः ॥ ३
ततोऽभ्यगच्छत्कौन्तेयमज्ञातो नाम माधवः ।
ददृशाते तदान्योन्यं प्रभासे कृष्णपाण्डवौ ॥ ४
तावन्योन्यं समाश्लिष्य पृष्ट्वा च कुशलं वने ।
आस्तां प्रियसखायौ तौ नरनारायणावृषी ॥ ५
ततोऽर्जुनं वासुदेवस्तां चर्यां पर्यपृच्छत ।
किमर्थं पाण्डवेमानि तीर्थान्यनुचरस्युत ॥ ६
ततोऽर्जुनो यथावृत्तं सर्वमाख्यातवांस्तदा ।
श्रुत्वोवाच च वार्ष्णेय एवमेतदिति प्रभुः ॥ ७
तौ विहृत्य यथाकामं प्रभासे कृष्णपाण्डवौ ।
महीधरं रैवतकं वासायैवाभिजग्मतुः ॥ ८
पूर्वमेव तु कृष्णस्य वचनात्तं महीधरं ।
पुरुषाः समलंचक्रुरुपजह्रुश्च भोजनम् ॥ ९
प्रतिगृह्यार्जुनः सर्वमुपभुज्य च पाण्डवः ।
सहैव वासुदेवेन दृष्टवान्नटनर्तकान् ॥ १०
अभ्यनुज्ञाप्य तान्सर्वानर्चयित्वा च पाण्डवः ।
सत्कृतं शयनं दिव्यमभ्यगच्छन्महाद्युतिः ॥ ११
तीर्थानां दर्शनं चैव पर्वतानां च भारत । C. 1. 7896 B. 1. 218. 12 K. 1. 238. 31

---

एव). Some MSS. °पूर्वेण.

2 Ś1 K1 om. $2^{ab}$ (cf. v. l. 1). — $^{ab}$) V1 °द्रे यानि तीर्थानि पश्चिमे भरतर्षभः. — $^{c}$) S transp. सर्वाणि and गत्वा स. — After 2, D4 (marg. *sec. m.*) S ins. a passage given in App. I (No. 113).

3 $^{a}$) Ś1 K1 °देशे. T G (except G1) प्रभासं समनुप्राप्तं. — $^{c}$) K2 तं; M6–8 तु (for च). Ñ2.3 B (except B6) Dn D4 सुपुण्यं रमणीयं च. — After 3, D4 (marg. *sec. m.*) S ins.:

2044* चारणानां तु वचनादेकाकी स जनार्दनः ।

4 $^{a}$) M (except M8) तत्राप्यगच्छ°. — $^{b}$) K2 नृप (for नाम). K4 Ñ V1 B D सखायं तत्र; Cd अज्ञातो नाम (as in text).

5 Ś1 K1 om. 5; G1 (hapl.) om. $5^{a}$–$8^{b}$. — $^{b}$) K0.2.3 Ñ1 G3 (after corr.) जने; Da1 मुने; T1 G2.5.6 M पथि; T3 G3 (befor corr.) जले (for वने). — $^{c}$) V1 रमेतां (for आस्तां). — $^{d}$) K4 Ñ1 V1 उभौ (for ऋषी).

6 G1 om. 6 (cf. v. l. 5). — $^{b}$) G5.6 तं च पार्थो ह्यपृच्छ°; M तत्कार्यं पर्य°. — G5.6 om. $6^{cd}$. — $^{c}$) K2.3 Ñ2.3 B D (except Dn3 D1.2) एतानि (for इमानि). T1 °र्थं पार्थ सर्वाणि; T3 G2.4 °र्थं पावनानीति. — $^{d}$) Ś1 K1.2 तीर्थान्युपच(K2 °स)र°; K3 °न्यनुसर°; D5 °न्यनुसरांसि च.

7 G1 om. 7 (cf. v. l. 5). — Before 7, T1 M3 ins. वैशं°. — $^{a}$) Ś1 K (except K2) Ñ1 B6 Da D1 तस्य (for ततो). — $^{c}$) V1 S (G1 om.) transp. उवाच and च. Ñ1 वाचं (for उवाच). Ś1 K Ñ1 स (for च). — $^{d}$) S (G1 om.) त्वेवमे° प्रभो.

8 G1 om. $8^{ab}$ (cf. v. l. 5). — $^{b}$) T1 समेतौ (for प्रभासे). Ś1 °पार्थिवौ. — $^{d}$) Ś1 K2 M6–8 उप°; K1 अप° (for अभि°).

9 $^{b}$) G1 M3.5 तु (for तं). — $^{c}$) K2 Ñ1.3 V1 B D (except D4.5) समंतात्; B1m पुरस्तात्. K2.3 Ñ2.3 B D (except D5) मंडयांचक्रुः; T3 G3.4 -तमलं°. — $^{d}$) Ś1 K0.1.4 सर्वकामसमृद्धिभिः.

10 K2 (hapl.) om. $10^{c}$–$11^{b}$.

11 K2 om. $11^{ab}$ (cf. v. l. 10). — $^{a}$) N V1 B D (except D5) °ज्ञाय तान्; S (except M6–8) °ज्ञातवान्. — $^{b}$) M6–8 तु (for च). — $^{c}$) Da D1.2 transp. सत्कृतं and शयनं. — $^{d}$) K0.3.4 Ñ1 D5 T G3–6 M सहाच्युतः; K2 G1.2 सहार्जुनः; Ñ2.3 Dn D4 महामतिः; B (except B6) समद्युतिः. — After 11, N (except K0.1 Ñ1) ins.:

2045* ततस्तत्र महाबाहुः शयानः शयने शुभे ।

12 T G M5 om. 12. — $^{a}$) Ñ3 B Da1 Dn D4 नदीनां (for तीर्थानां). N2.3 B D (except D1.2.5) पल्वलानां च (for दर्शनं चैव). — $^{b}$) K2.3 Ñ3 Dn D4 तथैव च; Ñ2 B Da D5 च दर्शनं (for च भा°). — $^{d}$) Ś1

C. 1. 7896 B. 1. 218. 12 K. 1. 238. 12 आपगानां वनानां च कथयामास सात्वते ॥ १२
स कथाः कथयन्नेव निद्रया जनमेजय ।
कौन्तेयोऽपहृतस्तस्मिञ्शयने स्वर्गसंमिते ॥ १३
मधुरेण स गीतेन वीणाशब्देन चानघ ।
प्रबोध्यमानो बुबुधे स्तुतिभिर्मङ्गलैस्तथा ॥ १४
स कृत्वावश्यकार्याणि वार्ष्णेयेनाभिनन्दितः ।
रथेन काञ्चनाङ्गेन द्वारकामभिजग्मिवान् ॥ १५
अलंकृता द्वारका तु बभूव जनमेजय ।
कुन्तीसुतस्य पूजार्थमपि निष्कुटकेष्वपि ॥ १६
दिदृक्षवश्च कौन्तेयं द्वारकावासिनो जनाः ।
नरेन्द्रमार्गमाजग्मुस्तूर्णं शतसहस्रशः ॥ १७
अवलोकेषु नारीणां सहस्राणि शतानि च ।
भोजवृष्ण्यन्धकानां च समवायो महानभूत् ॥ १८
स तथा सत्कृतः सर्वैर्भोजवृष्ण्यन्धकात्मजैः ।
अभिवाद्याभिवाद्यांश्च सर्वैश्च प्रतिनन्दितः ॥ १९
कुमारैः सर्वशो वीरः सत्कारेणाभिवादितः ।
समानवयसः सर्वानाश्लिष्य स पुनः पुनः ॥ २०
कृष्णस्य भवने रम्ये रत्नभोज्यसमावृते ।
उवास सह कृष्णेन बहुलास्तत्र शर्वरीः ॥ २१

इति श्रीमहाभारते आदिपर्वणि दशाधिकद्विशततमोऽध्यायः ॥ २१० ॥ समाप्तमर्जुनवनवासपर्व ॥

K$_1$ सात्वतः; M (except M$_5$) तत्वतः.

13 $^{a}$) Ś$_1$ K$_{0.1.4}$ D$_5$ स तथा; K$_{2.3}$ Ñ$_{2.3}$ B Da Dn D$_{1.2.4}$ एवं स; G$_1$ कथां स; M$_{6-8}$ स कथं. — $^{c}$) Ñ$_{2.3}$ B$_3$ Da$_1$ Dn D$_{4.5}$ °योपि हृ°; B$_5$ कुंतीपुत्रो हृ°. — $^{d}$) K$_{2.3}$ Ñ V$_1$ B D °संनिभे; T G (except G$_1$) सत्यविक्रमः.

14 $^{a}$) Ś$_1$ K$_1$ M$_{6-8}$ च; K$_{2.3}$ Ñ$_{2.3}$ B D (except D$_{1.2}$) एव; M$_5$ सु- (for स). — $^{b}$) T G (except G$_1$) वाद्यशब्देन. Ś$_1$ Da M$_{6-8}$ भारत; K$_1$ वानघ; Ñ$_2$ Dn D$_{2.4}$ चैव हृ. — $^{cd}$) M$_{6-8}$ transp. बुबुधे and स्तुतिभिर्.

15 $^{a}$) M$_5$ कृत्वा च (for स कृत्वा). Ś$_1$ K$_{0.3}$ B$_3$ D$_5$ °कर्माणि. — $^{b}$) Ś$_1$ °वंदितः. — After 15$^{ab}$, S ins.:

2046* वार्ष्णेयं समनुज्ञाय ततो वासमरोचयत् ।
तथेत्युक्त्वा वासुदेवो भोजनं वै शशास ह ।
यतिरूपधरं पार्थं विसृज्य सहसा हरिः ।
[ (L. 1) M$_{6-8}$ °ज्ञाप्य. ]

— $^{d}$) Here and below Ś$_1$ द्वारिका (for द्वार°).

16 S (except M$_{6-8}$) om. 16$^{cd}$. — $^{c}$) K$_{2.3}$ Ñ$_{2.3}$ V$_1$ B D (except D$_1$) M$_{6-8}$ कुंतीसुतस्य. — $^{d}$) K$_{0.4}$ D$_1$ अभि-; Ñ$_1$ अथ; M$_{6-8}$ इह (for the first अपि). K$_0$ M$_{7.8}$ निष्कंट°.

17 $^{a}$) Ñ$_2$ B$_6$ D दिदृक्षंतश्च. S गोविंदं. — $^{d}$) Ñ$_1$ स्तुवंतश्च सह°. — After 17, T G (except G$_{1.2}$) ins.:

2047* क्षणार्धमपि वार्ष्णेया गोविन्दविरहाक्षमाः ।
कौतूहलसमाविष्टा भृशमुत्प्रेक्ष्य संस्थिताः ।
[ (L. 1) T$_1$ G$_{5.6}$ °क्षताः. ]

18 $^{a}$) Ś$_1$ K (except K$_2$) Ñ$_1$ D$_5$ अथावलोके (for अव°). — $^{b}$) V$_1$ तस्मिंस्तु शतशस्तथा. — $^{d}$) V$_1$ °योभवन्महान्.

19 $^{a}$) K$_1$ सत्कृतः (for स तथा). M$_{3.5}$ transp. स and तथा. — $^{b}$) Ś$_1$ K Ñ$_1$ D$_{1.2.5}$ °कादिभिः. — $^{c}$) G$_1$ °द्याभिवाद्यार्हान्.

20 Ś$_1$ om. 20; G$_1$ (? hapl.) om. 20$^{ab}$. — $^{a}$) V$_1$ सत्कृतो; T$_3$ G$_{3-6}$ सर्वतो. — $^{b}$) K$_0$ D$_5$ °वंदितः; K$_{1-4}$ V$_1$ B$_5$ °पूजितः; Ñ$_{2.3}$ B$_{1.3.6}$ Dn °चोदितः; M$_3$(*inf. lin.* as in text)$_{.5}$ °नंदितः. — $^{d}$) K$_4$ आभाष्य. K$_1$ D$_1$ S (except T$_1$) च (for स).

21 $^{b}$) Ñ$_1$ वृष्णिभोजस°. — For 21, S subst.:

2048* कृष्णः स्वभवनं रम्यं प्रविवेश महाद्युतिः ।
प्रवासादागतं सर्वा देव्यः कृष्णमपूजयन् ।
[ (L. 1) M$_{3.5}$ दिव्यं (for रम्यं). G$_1$ M$_{3.5}$ महाबलः. — (L. 2) T$_3$ G$_{2-4}$ प्रभासाद्. ]

Colophon. *Major parvan:* T$_3$ G M संभव° (for आदि°). — *Sub-parvan:* K Ñ$_3$ B Da Dn$_{1.n2}$ D$_{1.2.4}$ M$_3$ अर्जुन(B$_6$ om.)तीर्थयात्रा (B$_5$ °वनवास); T$_1$ संभव; to it K$_{0.4}$ add समाप्त. — *Adhy. name:* Ś$_1$ K$_1$ रैवतकगिरिम(Ś$_1$ °स)हः; K$_{0.3.4}$ D$_5$ द्वारका(K$_3$ °काभि)गमनं; M$_5$ वासुदेवागमः. — *Adhy. no.* (figures, words or both): Dn$_3$ 217; D$_4$m 227; D$_5$ 168; T$_1$ 223; T$_3$ G$_{1.4}$ 178; G$_2$ 175; G$_3$ 179; G$_{5.6}$ M 177. — *S'loka no.:* Dn 21; M$_3$ 40. — *Aggregate s'loka no.:* Dn$_2$ 7894.

## 211

1 Ś$_1$ K (except K$_0$) S om. उवाच. — In Ś$_1$ the portion of the text from कतिपया° (in $^{a}$) up to

# २११

वैशंपायन उवाच ।
ततः कतिपयाहस्य तस्मिन्रैवतके गिरौ ।
वृष्ण्यन्धकानामभवत्सुमहानुत्सवो नृप ॥ १
तत्र दानं ददुर्वीरा ब्राह्मणानां सहस्रशः ।
भोजवृष्ण्यन्धकाश्चैव महे तस्य गिरेस्तदा ॥ २
प्रासादै रत्नचित्रैश्च गिरेस्तस्य समन्ततः ।
स देशः शोभितो राजन्दीपवृक्षैश्च सर्वशः ॥ ३
वादित्राणि च तत्र स्म वादकाः समवादयन् ।
ननृतुर्नर्तकाश्चैव जगुर्गानानि गायनाः ॥ ४
अलंकृताः कुमाराश्च वृष्णीनां सुमहौजसः ।
यानैर्हाटकचित्राङ्गैश्चञ्चूर्यन्ते स्म सर्वशः ॥ ५
पौराश्च पादचारेण यानैरुच्चावचैस्तथा ।
सदाराः सानुयात्राश्च शतशोऽथ सहस्रशः ॥ ६
ततो हलधरः क्षीबो रेवतीसहितः प्रभुः ।
अनुगम्यमानो गन्धर्वैरचरत्तत्र भारत ॥ ७
तथैव राजा वृष्णीनामुग्रसेनः प्रतापवान् ।
उपगीयमानो गन्धर्वैः स्त्रीसहस्रसहायवान् ॥ ८
रौक्मिणेयश्च साम्बश्च क्षीबौ समरदुर्मदौ ।
दिव्यमाल्याम्बरधरौ विजह्रातेऽमराविव ॥ ९
अक्रूरः सारणश्चैव गदो भानुर्विडूरथः ।
निशठश्चारुदेष्णश्च पृथुर्विपृथुरेव च ॥ १०
सत्यकः सात्यकिश्चैव भङ्गकारसहाचरौ । C. 1. 7916 B. 1. 219. 11 K. 1. 239. 11

°मभवत् (in $^{c}$) is lost on a broken part. — $^{a}$) T1 G1.2 M °पयाहस्सु. — $^{b}$) S तत्र रैव°. — $^{d}$) K2.3 Ñ2 B D (except D5) उत्सवो नृपसत्तम.

2 Ś1 missing for $2^{bc}$. — $^{b}$) K (except K2) Ñ V1 Dn D5 ब्राह्मणेभ्यः. — $^{d}$) K2 m.4 V1 Dn1 D5 महेंद्रस्य; K3 महांतश्च; T1 महत्यस्मिन्; T3 G1.4 (after corr.) M3 महे तस्मिन्; G2.3.4 (before corr.).5.6 M5–8 मखे तस्मिन्. Ñ3 गिरस्तथा; S गिरौ तथा (G1.2 M6–8 °दा). Cd cites महः.

3 $^{a}$) Ś1 K0.1.4 Ñ1 पादपै (for प्रासादै). — Ś1 missing from च (in $^{a}$) up to दीप (in $^{d}$). K1 S (except M6–8) तु (for च). — $^{b}$) K0.3 Ñ3 V1 तत्र (for तस्य). K4 समीपतः. — G1 om. $3^{cd}$. — $^{c}$) K1 °शः पूजितो. — $^{d}$) K2 फल°; Ñ2 B (except B5) D कल्प°; Ñ3 V1 नदी°; Cd Arjp दीप° (as in text). Ś1 K4 च सर्वतः; K0.2 S (G1 om.) च शोभितः (M3.5 समंततः).

4 V1 (hapl.) om. 4–5. Ś1 missing from स्म (in $^{a}$) up to जगुर्गा- (in $^{d}$). — $^{a}$) K3 Ñ B D तत्रान्ये (Ñ3 तान्येव); T3 G2–4 तत्र स्युर्. — $^{b}$) K0 चाथ वादयन्. — M6–8 om. $4^{c}$–$5^{d}$. — $^{c}$) K0.4 D1.5 चापि (for चैव). — $^{d}$) K2 Ñ2 B Da Dn1.n2 D4 गेयानि; K4 सामानि; Ñ3 तत्रैव; Dn3 D1.2 S (M6–8 om.) गीतानि. Ñ3 Dn3 D4.5 S (M6–8 om.) गायकाः.

5 V1 M6–8 om. 5 (cf. v. l. 4). — Ś1 missing from श्च (in $^{a}$) up to चञ्चूर्यन्ते (in $^{d}$). — $^{b}$) K2 Ñ2.3 B3.6 D T3 G2–4 M3 (*inf. lin.* as in text) सुमहौजसां. — Ñ1 om. $5^{c}$–$6^{d}$. — $^{c}$) K1 कांचन° (? gloss); K2 Ñ2.3 V1 B D (except D5) हाटकचित्रैश्च. — $^{d}$) K2 B1.3 च (for स्म). M3.5 भारत (for सर्व°).

6 Ñ1 om. 6 (cf. v. l. 5); M3 (? hapl.) om. 6–7.

7 M3 om. 7 (cf. v. l. 6). — $^{a}$) Ś1 K (except K2) D5 हलायुधः. — $^{b}$) Ś1 K1 रेवत्या. — $^{c}$) Hypermetric! cf. $8^{c}$. Ś1 K D5 अनुगीय° (K2 m as in text); T3 G4 अभिगम्य°; G3 अभेद्य°. T G M5 बहुभिर्. — K1 D1 (hapl.) om. $7^{d}$–$8^{c}$.

8 K1 D1 om. $8^{abc}$ (cf. v. l. 7). — $^{c}$) Hypermetric! K2 प्रगीय°; K3 Ñ Dn D2.4.5 अनुगीय°; V1 B1.3 Da अनुगम्य° (cf. $7^{c}$); B6 अनुगीतः स.

9 $^{a}$) K2 (m as in text).4 G2 M3 रौहिणे°; Cd as in text. Some MSS. शांबश्च. — $^{b}$) K3 D2.5 S (except M3) समर(M6–8 परम)दुर्जयौ. — $^{c}$) Ś1 K1.3.4 Da1 D5 °माल्यांबर°.

10 $^{b}$) K2.3 Ñ B D (except D5) गदो बभ्रुर्. N (except Dn1) T1 G1.2.5.6 विदू(Ś1 °भू)रथः; cf. 1. 90. 42. — $^{c}$) Ś1 निषद°; K1 °शह°; K2 °सित°; K3 °षध°; T3 G4 निःशठ°; G2.3 निःशंक°.

11 $^{b}$) K0.4 D5 भृंगकार-; K2.3 भद्रकार-; T1 G1 भंगाकार-. K0.2.3 Da -सहावरौ; K4 -महाबलः; Ñ1

C. 1. 7916 B. 1. 219. 11 K. 1. 230. 11 हार्दिक्यः कृतवर्मा च ये चान्ये नानुकीर्तिताः ॥ ११
एते परिवृताः स्त्रीभिर्गन्धर्वैश्च पृथक्पृथक् ।
तमुत्सवं रैवतके शोभयांचक्रिरे तदा ॥ १२
तदा कोलाहले तस्मिन्वर्तमाने महाशुभे ।
वासुदेवश्च पार्थश्च सहितौ परिजग्मतुः ॥ १३
तत्र चङ्क्रम्यमाणौ तौ वसुदेवसुतां शुभाम् ।
अलंकृतां सखीमध्ये भद्रां ददृशतुस्तदा ॥ १४
दृष्ट्वैव तामर्जुनस्य कन्दर्पः समजायत ।
तं तथैकाग्रमनसं कृष्णः पार्थमलक्षयत् ॥ १५
अथाब्रवीत्पुष्कराक्षः प्रहसन्निव भारत ।
वनेचरस्य किमिदं कामेनालोड्यते मनः ॥ १६
ममैषा भगिनी पार्थ सारणस्य सहोदरा ।
यदि ते वर्तते बुद्धिर्वक्ष्यामि पितरं स्वयम् ॥ १७

अर्जुन उवाच ।

दुहिता वसुदेवस्य वासुदेवस्य च स्वसा ।
रूपेण चैव संपन्ना कमिवैषा न मोहयेत् ॥ १८
कृतमेव तु कल्याणं सर्वं मम भवेद्ध्रुवम् ।
यदि स्यान्मम वार्ष्णेयी महिषीयं स्वसा तव ॥ १९
प्राप्तौ तु क उपायः स्यात्तद्ब्रवीहि जनार्दन ।
आस्थास्यामि तथा सर्वं यदि शक्यं नरेण तत् ॥२०

वासुदेव उवाच ।

स्वयंवरः क्षत्रियाणां विवाहः पुरुषर्षभ ।
स च संशयितः पार्थ स्वभावस्यानिमित्ततः ॥ २१
प्रसह्य हरणं चापि क्षत्रियाणां प्रशस्यते ।
विवाहहेतोः शूराणामिति धर्मविदो विदुः ॥ २२
स त्वमर्जुन कल्याणीं प्रसह्य भगिनीं मम ।

---

-महाबलौ; Ñ2 B Dn D4 -महारवौ; D1.2 -महोदरौ; M5 -सखेचरौ; M6-8 -सहायकौ. — c) K2.3 Ñ2.3 V1 B D (except D5) °क्य उद्धवश्चैव.

12 After 12, S ins.:

2049* वासुदेवो ययौ तत्र सह स्त्रीभिर्गुणान्वितः ।
दत्त्वा दानं द्विजातिभ्यः परिव्राजमपश्यत ।

13 a) Ś1 K0.1.4 D5 ततः; K2 B1.3.5 चित्रे; K3 तत्र; N1 D1.2 तथा; Da1 Dn D4 चित्र-. Ñ2 Dn D4 S (except M3.5) कौतूहले. — b) K2 m.3 Ñ V1 B D (except D5) महाद्भुते; K4 महे शुभे; S महोत्सवे.

14 a) Ś1 K0.1 ततः (for तत्र). Ñ1.2 B (except B1) Dn D2.4 G1 M3.5 चंक्रम°; D5 चंक्रममाणानां. — c) K0.3.4 N1 V1 S (except G1 M6.7) स्वलंकृतां. — d) K2 V1 B6 Dn1.n3 T G (except G5.6) M5 सुभद्रां ददृशुस्तदा; D1.2.4 सुभद्रां ददृशेर्जुनः.

15 a) G2 दृष्ट्वैतामर्जुनस्यास्य. — c) K0 D5 S त्व(T3 G2-4 चा)नेकाग्र°; K2-4 B3.6 D1.2.4 (after corr.) तदेकाग्र°; Ñ3 B1.5 Da Dn D4 (before corr.) तदैकाग्र°; Cd अनेकाग्र°.

16 a) Ñ2 B3.6 D (except Da D5) अब्रवीत्पुरुषव्याघ्रः; S अब्रवीत्पुंडरीकाक्षः.

17 a) M6-8 ममैव. — b) T G सहोदरी. — After $17^{ab}$, K2-4 N2.3 V1 B D ins.:

2050* सुभद्रा नाम भद्रं ते पितुर्मे दयिता सुता ।

— d) B6 D1.2 °रं स्वकं. — After 17, M6-8 (which om. the ref. before 18) ins.:

2051* अब्रवीत्पुण्डरीकाक्षं प्रहसन्निव भारत ।

(cf. $16^{ab}$ and v. l.).

18 Ś1 K1 S om. उवाच (M6-8 om. the ref.). — c) Ś1 K4 Ñ1 एव च; Ñ2 B1 Da1 Dn चैषा (for चैव). G2 रूपयौवनसंपन्ना. — d) B (except B1) Dn1 (by corr.) कमेवैषा; G1 कथं चैषा. K0 D5 न लोभयेत्; G4 (before corr.) मनो हरेत्.

19 b) K2 स्वयमेव भ°. N1 स्वयं (for ध्रुवम्). — T3 G2-4 ins. after $19^{ab}$: G5.6, after 19:

2052* देववृन्दः सदा त्वां तु स्मृत्वा विजयतेऽसुरान् ।
तव संदर्शनात्स्वामिन्नप्राप्यं न हि तत्किमु ।

— c) G (except G1.4) वार्ष्णेय.

20 a) Ś1 K0.1.4 B5 प्राप्तौ च; G1 प्राप्तुं तां. T1 तत्प्राप्तौ क उपायं मां. — b) Ś1 K0.1 तत्प्रब्रूहि; K2.3 Ñ2 V1 B5.6 D S (except M6-8) तं ब्र°; K4 तद्ब्रूहि त्वं. — c) K2 Ñ V1 B D M6-8 तदा; K4 G1 M5 यथा; T3 G4 इति तत्. — d) K2 कर्तव्यं मानुषेण तत्; D5 यदि शक्यं जनार्दन.

21 Ś1 K1 S om. उवाच. — b) K4 क्षत्रियर्षभ; M6-8 पुरुषोत्तम. — c) B5 M3 स तु. Ś1 K1 संगमितः पार्थ; D2 संशयितार्थश्च. Cd cites संशयितः (as in text). — d) K2 विवाहस्यानि°; S (except G1.5 M3.5) स्वभाव[ः]स्यान्नि°.

22 b) K1 विशिष्यते; G3 विशां पते. — c) Ñ2.3 M3 विवाहहेतुः. S कन्यानां. — d) T3 G2-4 वेदविदो.

हर स्वयंवरे ह्यस्याः को वै वेद चिकीर्षितम् ॥ २३
वैशंपायन उवाच ।
ततोऽर्जुनश्च कृष्णश्च विनिश्चित्येतिकृत्यताम् ।
शीघ्रगान्पुरुषान्राजन्प्रेषयामासतुस्तदा ॥ २४
धर्मराजाय तत्सर्वमिन्द्रप्रस्थगताय वै ।
श्रुत्वैव च महाबाहुरनुजज्ञे स पाण्डवः ॥ २५

इति श्रीमहाभारते आदिपर्वणि एकादशाधिकद्विशततमोऽध्यायः ॥ २११ ॥

# २१२

वैशंपायन उवाच ।
ततः संवादिते तस्मिन्ननुज्ञातो धनंजयः ।
गतां रैवतके कन्यां विदित्वा जनमेजय ॥ १
वासुदेवाभ्यनुज्ञातः कथयित्वेतिकृत्यताम् ।
कृष्णस्य मतमाज्ञाय प्रययौ भरतर्षभः ॥ २
रथेन काञ्चनाङ्गेन कल्पितेन यथाविधि ।
सैन्यसुग्रीवयुक्तेन किङ्किणीजालमालिना ॥ ३
सर्वशस्त्रोपपन्नेन जीमूतरवनादिना ।
ज्वलिताग्निप्रकाशेन द्विषतां हर्षघातिना ॥ ४
संनद्धः कवची खड्गी बद्धगोधाङ्गुलित्रवान् । C. 1. 7985 B. 1. 220. 5 K. 1. 244. 35

---

23 $^{a}$) Ś1 Ko.1.4 Ñ1 अतः प्रचिंत्य क°. — After 23$^{ab}$, T3 G (except G1) ins.:

2053* यतिरूपधरस्त्वं तु यदा कालविपाकता ।

— $^{c}$) Da तस्याः; S चा(G3 वा)स्याः. — $^{d}$) Ko D5 कस्ते वेद; D1 को वेद वै (by transp.).

24 Before 24, only Dn3 ins. वैशं° उ° (as in text), and G1.2 M6-8 वैशं°; the rest om. the ref. — $^{b}$) Ś1 K1 विनिश्चित्य विहृत्य च (Ś1 तां). — $^{c}$) K3 Ñ2.3 B D अन्यान् (for राजन्).

25 $^{b}$) Ko.3.4 °प्रस्थ(K4 °स्थे)स्थिताय वै; T1 °प्रस्थनिवासिने. — $^{c}$) T1 G1 M महाबुद्धिर्. — $^{d}$) K1 च पांडवः; T1 समात्मकः; T3 G2-4 समाहितः; G1 समावृतः; G5.6 M (except M5) समावृकः. — After 25, S ins.:

2054* भीमसेनस्तु तच्छ्रुत्वा कृतकृत्यं स मन्यते ।
इत्येवं मनुजैः सार्धमुक्त्वा प्रीतिमुपेयिवान् ।

Colophon. *Major parvan:* T3 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 K Ñ3 B3.5.6 Da Dn1.n3 D1.2.4.5 M3.5 सुभद्राहरण (K3 अर्जुनतीर्थयात्रा and सुभद्राहरण); B1 अर्जुनतीर्थयात्रा. — *Adhy. name:* Ko.4 वासुदेवार्जुन(K4 °नयोर्)मंत्रः; K1 वासुदेवमंत्रः. — *Adhy. no.* (figures, words or both): K1 213; Dn3 218; D4m 228; D5 169; T1 224; T3 G1.4 179; G2 176; G3 180; G5.6 M 178. — *S'loka no.:* Dn M3 25. — *Aggregate s'loka no.:* Dn3 7919.

## 212

☞ The sequence of st. 1-8 in S (which om. 5$^{cd}$, 7$^{c}$-8$^{b}$) is: 1$^{ab}$, 2, 6, 7$^{ab}$, 1$^{cd}$ (followed by passage No. 114 given in App. I, see below), 3-5$^{ab}$, 8$^{cd}$.

1 K1.3.4 D2 S om. उवाच; K2 om. the ref. Ś1 om. up to संवादि- (in $^{a}$). — $^{a}$) Ko.3.4 संनिश्चिते; K1 Ñ1 संचारिते; Ñ3 V1 B3.6 समु°; B1.3m संव°; Da संमु°. S चारैः संचारिते त°; Arjp (?) संचारिणा तु तच्छ्रुत्वा. Cd cites संचारिणा (=वार्ताहरेण). — T3 G2.4 om. 1$^{cd}$. — $^{c}$) S (T3 G2.4 om.) रैवतकात्. — $^{d}$) K2 विनिश्चित्य शुभाननां; S (T3 G2.4 om.) प्रविष्टां द्वारकां प्रति. — A passage given in App. I (No. 114) is ins. in S after 1$^{cd}$ (in T3 G2.4, which om. 1$^{cd}$, after 7$^{ab}$); in D4, suppl. fol. *sec. m.*, after 2$^{ab}$.

2 For the sequence of S cf. v. l. 1. — $^{a}$) K2 ततोर्जुनोभ्य°. After 2$^{ab}$, D4 ins. a passage given in App. I (No. 114); cf. v. l. 1. — $^{c}$) Ñ2 Dn D2.4.5 आदाय; S आख्याय. — $^{d}$) K4 पुरुष°; Some MSS. °र्षभ.
— After 2, S ins.:

2055* वृष्णैः सहोत्सवैरेवं वृष्णयोऽप्यगमन्पुरीम् ।
[ M वृत्तोत्सवे रैवतके (for the prior half). ]

3 For sequence of S cf. v. l. 1; G3 om. 3-5$^{ab}$. — $^{b}$) Ś1 Ko-3 S (G3 om.) सैन्य- (as in text); B5.6 सैड्य-; the rest शैब्य-.

4 G3 om. 4 (cf. v. l. 3). — $^{b}$) Ko Ñ1 V1 D2.5 T3 G4-6 -वर-; K3 -रथ-; D1 इव (for -रव-). — $^{c}$) T3 G4 ज्वलितार्क°. — $^{d}$) T3 G4 °नाशिना.

5 G3 om. 5$^{ab}$ (cf. v. l. 3). K3 reads 5$^{abc}$ in marg. — After 5$^{ab}$, S (except G3) ins.:

2056* युक्तः सेनानुयात्रेण रथमारोप्य माधवीम् ।

C. 1. 7935 B. 1. 220. 5 मृगयाव्यपदेशेन यौगपद्येन भारत ॥ ५
सुभद्रा त्वथ शैलेन्द्रमभ्यर्च्य सह रैवतम् ।
दैवतानि च सर्वाणि ब्राह्मणान्स्वस्ति वाच्य च ॥ ६
प्रदक्षिणं गिरिं कृत्वा प्रययौ द्वारकां प्रति ।
तामभिद्रुत्य कौन्तेयः प्रसह्यारोपयद्रथम् ॥ ७
ततः स पुरुषव्याघ्रस्तामादाय शुचिस्मिताम् ।
रथेनाकाशगेनैव प्रययौ स्वपुरं प्रति ॥ ८
ह्रियमाणां तु तां दृष्ट्वा सुभद्रां सैनिको जनः ।
विक्रोशन्प्राद्रवत्सर्वो द्वारकामभितः पुरीम् ॥ ९
ते समासाद्य सहिताः सुधर्मामभितः सभाम् ।
सभापालस्य तत्सर्वमाचख्युः पार्थविक्रमम् ॥ १०
तेषां श्रुत्वा सभापालो भेरीं सांनाहिकीं ततः ।
समाजघ्ने महाघोषां जाम्बूनदपरिष्कृताम् ॥ ११
क्षुब्धास्तेनाथ शब्देन भोजवृष्ण्यन्धकास्तदा ।
अन्नपानमपास्याथ समापेतुः सभां ततः ॥ १२
ततो जाम्बूनदाङ्गानि स्पर्ध्यास्तरणवन्ति च ।
मणिविद्रुमचित्राणि ज्वलिताग्निप्रभाणि च ॥ १३
भेजिरे पुरुषव्याघ्रा वृष्ण्यन्धकमहारथाः ।
सिंहासनानि शतशो धिष्ण्यानीव हुताशनाः ॥ १४
तेषां समुपविष्टानां देवानामिव संनये ।
आचख्यौ चेष्टितं जिष्णोः सभापालः सहानुगः ॥ १५
तच्छ्रुत्वा वृष्णिवीरास्ते मदरक्तान्तलोचनाः ।
अमृष्यमाणाः पार्थस्य समुत्पेतुरहंकृताः ॥ १६
योजयध्वं रथानाशु प्रासानाहरतेति च ।

---

[ T3 G4.6 गुप्त-; G5 गुप्तः (for युक्तः). ]
— S om. $5^{cd}$. — $^{d}$) Ñ1 चानघ. K3.4 Ñ3 B3 D1.2 स (B3 प्र-) ययौ भरतर्षभ (Ñ3 D1 °भः); V1 ययौ रैवतकं गिरिं; B5.6 Dn D4.5 प्र(B5 स)ययौ पुरुषर्षभः.

6 For sequence of S cf. v. l. 1. — $^{a}$) K2 S -व्यथ. — $^{b}$) Ś1 K1 °भ्यर्च्य मह-; K0 °भ्यर्च्य स ह; K2.3 corrupt; Ñ1 समभ्यर्च्य च; Ñ2 B (except B1) D (except D5) °भ्यर्च्यैव हि. M (except M3) दैवतं.

7 $^{a}$) Ś1 K0 Ñ2 Dn D2.4.5 गिरेः; K3 स्वयं. — After $7^{ab}$, Ñ1 ins.:

2057* सुभद्रां कृष्णभगिनीं स्त्रीभिः परिवृतां तदा ।,

while S reads $1^{cd}$ (om. in T3 G2.4; cf. v. l. 1). — S om. $7^{c}$–$8^{b}$ (G3 om. $7^{c}$–$14^{d}$). — After 7, K (except K1) Ñ2 V1 B D ins.:

2058* सुभद्रां चारुसर्वाङ्गीं कामबाणप्रपीडितः ।

8 S om. $8^{ab}$; G3 om. $8^{cd}$ also (cf. v. l. 7). — $^{c}$) Ś1 K1 आकाशवेगेन; K2.4 Ñ2 V1 B1.3.6 Dn1.n2 D4 कांचनांगेन; Ñ1 कामवानेव; Dn3 D1.2 कामवे(D1 °यो)गेन. — $^{d}$) K4 G5.6 स्वपुरीं.

9 G3 om. 9 (cf. v. l. 7). — $^{b}$) K2 Ñ2 V1 B D T1 °का जनाः. — $^{c}$) K0 T3 G2.4-6 व्या(K0 G2 व्य)क्रोशत्. K2 Ñ2 V1 B D T1 विक्रोशन्तो(D5 T1 व्याक्रोशन्प्रा)द्रवन्सर्वे.

11 G3 om. 11 (cf. v. l. 7). — $^{b}$) T1 G1 M संनादयं(G1 °धीं)स्तदा; T3 G4 सांनाहयंस्तदा; G5.6 सांनाहयत्तदा.

12 G3 om. 12 (cf. v. l. 7). — $^{a}$) Ñ1 क्रुद्धास् (for क्षुब्धास्). T3 G4-6 क्षोभितास्तेन; G2 क्षुधमांस्तेन (all these om. अथ). — $^{b}$) Ś1 K0.4 B5 तथा; Ñ1.3 ततः. — After $12^{ab}$, S (except G3) ins.:

2059* अन्तर्द्वीपात्समुत्पेतुः सहसा सहितास्तदा ।

[ G1 M5 सभां वै; M6-8 तथैव (for सहसा). T1 सहसैव कृते तदा. ]

— $^{c}$) Da D1.2 अथापास्य (by transp.); S (G3 om.) अपाहाय. Ś1 K1 Ñ1 °पानाद्य(°नम)पास्यैव. — $^{d}$) K2 Ñ2 V1 B D (except Da2 D5) T3 G2.4-6 समंततः; Ñ1 ततः सभां (by transp.).

13 G3 om. 13 (cf. v. l. 7). — $^{a}$) Ñ2 V1 B5.6 D तत्र. — $^{b}$) K1 T3 G2.4.6 परार्ध्यास्तरणानि; G1 चित्रास्तरण°.

14 G3 om. 14 (cf. v. l. 7). — $^{b}$) G1 M6-8 °महाबलाः. — D1 om. $14^{c}$–$15^{a}$. — $^{c}$) Ś1 K0.1.4 Ñ1 बहुशः. — $^{d}$) K1 काष्ठानीव. T3 G2.4 दीप्यमानानि सर्वशः.

15 D1 om. 15 (cf. v. l. 14). — $^{b}$) T3 G (except G1) संगमे. — $^{d}$) Ñ1 सभानुगः; T1 तथाविधं; G1 सभाभृतः; M समागतः (M3.5 °तान्) (for सहा°).

16 $^{a}$) Ñ1 °त्वा पृथु°. — $^{b}$) Ñ2 V1 B6 D (except D5) मदसंरक्त°; B3 क्रोध°. — $^{c}$) K2 B पार्थाय. — $^{d}$) K0.4 D5 अमर्षिताः; T3 G (except G1) महाबलाः (for अहं°). T1 यादवाः सहसा कृताः.

17 $^{a}$) G2 योजयित्वा. — After $17^{a}$, S ins.:

2060* नागानश्वांस्तथैव च ।
कवचानाहर क्षिप्रं.

धनूंषि च महार्हाणि कवचानि बृहन्ति च ॥ १७
सूतांश्चुक्रुशुः केचिद्रथान्योजयतेति च ।
स्वयं च तुरगान्केचिन्निन्युर्हेमविभूषितान् ॥ १८
रथेष्वानीयमानेषु कवचेषु ध्वजेषु च ।
अभिक्रन्दे नृवीराणां तदासीत्संकुलं महत् ॥ १९
वनमाली ततः क्षीबः कैलासशिखरोपमः ।
नीलवासा मदोत्सिक्त इदं वचनमब्रवीत् ॥ २०
किमिदं कुरुथाप्रज्ञास्तूष्णीं भूते जनार्दने ।
अस्य भावमविज्ञाय संक्रुद्धा मोघगर्जिताः ॥ २१
एष तावदभिप्रायमाख्यातु स्वं महामतिः ।
यदस्य रुचितं कर्तुं तत्कुरुध्वमतन्द्रिताः ॥ २२
ततस्ते तद्वचः श्रुत्वा ग्राह्यरूपं हलायुधात् ।
तूष्णीं भूतास्ततः सर्वे साधु साध्विति चाब्रुवन् ॥ २३
समं वचो निशम्येति बलदेवस्य धीमतः ।
पुनरेव सभामध्ये सर्वे ते समुपाविशन् ॥ २४
ततोऽब्रवीत्कामपालो वासुदेवं परंतपम् ।
किमवागुपविष्टोऽसि प्रेक्षमाणो जनार्दन ॥ २५
सत्कृतस्त्वत्कृते पार्थः सर्वैरस्माभिरच्युत ।
न च सोऽर्हति तां पूजां दुर्बुद्धिः कुलपांसनः ॥ २६
को हि तत्रैव भुक्त्वान्नं भाजनं भेत्तुमर्हति ।
मन्यमानः कुले जातमात्मानं पुरुषः क्वचित् ॥ २७
ईप्समानश्च संबन्धं कृतपूर्वं च मानयन् ।
को हि नाम भवेनार्थी साहसेन समाचरेत् ॥ २८
सोऽवमन्य च नामास्माननादृत्य च केशवम् । C. 1. 7959 B. 1. 220. 29 K. 1. 244. 56

---

[ (L. 2) $T_3$ $G_{2-4}$ °चान्याहर ($G_2$ °रत्); $G_{5.6}$ °चानाहरन्; $G_1$ °चानक्षतान्. ]
— $K_3$ (hapl.) om. $17^{c}$–$18^{b}$. — $^{d}$) $G_1$ $M_3$ तोमराणि. $B_6$ Da $D_{1.2}$ महांति च.

18 $K_3$ om. $18^{ab}$ (cf. v. l. 17). — $^{a}$) $Ñ_1$ च चुक्रु°; $T_3$ G (except $G_1$) विचुक्रु°. — $^{b}$) $K_0$ रथानायोजयेति; $D_5$ रथानां योजयेति; $T_1$ रथानाहरतेति. — $^{d}$) $Ñ_1$ $T_1$ हेमपरिष्कृतान्. $Ś_1$ $K_1$ आनिन्युर्हेमभू°; $N_2$ $B_6$ $D_{1.2.4}$ अयुंजन् हेमभू° ($D_1$ हेममालिनः).

19 $^{b}$) $T_3$ $G_{2-6}$ महत्सु (for ध्वजे°). — $^{c}$) $D_1$ आक्रंदे च; $G_{5.6}$ महास्कंधे. $Ś_1$ $K_{1.2}$ $M_{3.5}$ °क्रंदेन वी°; $T_3$ $G_{2-4}$ महायादववी°. — $^{d}$) $K_{2.3}$ $Ñ_2$ $V_1$ B Da $D_{4.5}$ $G_1$ तुमु(or °म)लं; $M_{6-8}$ क्रंदनं.

20 $^{a}$) $K_2$ B (except $B_6$) $D_1$ तदा (for ततः).

21 $^{a}$) $Ś_1$ $K_2$ $D_{1.5}$ °ताम्रा°; $K_{0.1}$ $N_3$ °ताम्र°; $N_1$ पुरुषाः प्रा°; $T_1$ M त्वकृतप्र°; $T_3$ G चाकृतप्र° ($G_1$ तु कृतं प्रा°). — $K_0$ (? hapl.) om. $21^{d}$–$22^{a}$. — $^{d}$) $Ś_1$ $K_1$ $G_{2-6}$ $M_5$ मेघ°; $K_{3.4}$ $D_5$ किमु गर्जथ ($K_3$ °त); $D_1$ मोह°; $D_2$ आहव°.

22 $K_0$ om. $22^{a}$ (cf. v. l. 21). — $^{b}$) $Ś_1$ $K_2$ $D_{1.5}$ $G_{2.5.6}$ आख्यातुं स्वं; $G_1$ M आख्यातीव. $B_5$ सु- (for स्वं). $T_3$ G (except $G_1$) °तु मम यद्धृदि. — $^{c}$) $Ś_1$ $K_{0.1.4}$ यदस्मै; $K_3$ यद्यस्य. $K_{2-4}$ $B_1$ Dn $D_2$ $G_1$ $M_{3.5}$ रुचिरं. $T_1$ corrupt.

23 $^{a}$) $Ñ_1$ $M_5$ °स्तद्वचनं; $T_3$ G (except $G_1$) °स्ते वचनं. — $^{c}$) $K_{0.3}$ $D_{1.2.5}$ $G_3$ $M_5$ तूष्णीभूतास् ($D_5$ °भूत्वा). — $^{d}$) $Ś_1$ $K_{0.1.4}$ $D_5$ $T_1$ अथ (for च).

24 $^{a}$) $K_{0.3.4}$ सु($K_4$ स)संवादं; $B_1$ $D_{2.4.5}$ समं वाचो; $B_{3.5}$ सर्वे वाचं; $B_6$ सर्वे व°. $K_0$ $D_5$ निशम्यैते; $Ñ_2$ $B_6$ Da Dn $D_4$ °म्यैव; $B_{1.3.5}$ °म्याथ. $K_2$ $V_1$ $D_1$ समं ततो($V_1$ समवाये)थ निःशब्दे; $T_1$ $G_{5.6}$ समवाच(°वोचं)स्तु निःशब्दा; $T_3$ $G_{2-4}$ यादवास्त्वपि ($G_2$ om. तु) निःशब्दा; $G_1$ समावाचा तु निःशब्दा.

25 $^{ab}$) $K_{2.3}$ $Ñ_3$ B (except $B_6$) वचो रामो वासु°; $Ñ_2$ Dn $D_4$ वासुदेवं वचो रामः; $T_1$ $G_1$ M वासुदेवं कामपालः (by transp.). $Ś_1$ $K_1$ अरिंदमं; $K_4$ $Ñ_2$ B D M (except $M_3$) परंतपः. — After $25^{ab}$, S ins.:

2061* त्रैलोक्यनाथ हे कृष्ण भूतभव्यभविष्यकृत् ।

[ Before the line, $T_1$ ins. कामपालः; $G_1$ बलः; $M_{5-8}$ बलदेवः. ]
— $^{c}$) $T_1$ $M_{6-8}$ किमिवांगोप°; $T_3$ $G_{3.4}$ किमुपांशूप°; $G_{5.6}$ किमु चात्रोप°. — $T_1$ om. $25^{d}$–$26^{a}$. — $^{d}$) $V_1$ मुहुर्मुहुः; S ($T_1$ om.) जनाकुलं.

26 $T_1$ om. $26^{a}$ (cf. v. l. 25). — $^{b}$) $G_1$ M (except $M_3$) अर्चितः (for अच्युत).

27 $^{a}$) $Ś_1$ $K_{0.1.4}$ $Ñ_1$ $D_{1.2.4}$ भुक्त्वैव ($Ñ_1$ °क्त्वाति; $D_2$ °क्त्वा हि) तत्रान्नं; $G_6$ तत्रैव भित्वागां. — $^{b}$) $G_2$ पापकृद् (for भाज°). $Ś_1$ $K_1$ भक्तुम्. $T_1$ $G_5$ भोक्तुमर्हति पापकृत्; $G_6$ अपीमां भोक्तुमर्हसि. — $^{c}$) $Ś_1$ K (except $K_2$) $D_5$ जन्म; $T_3$ $G_3$ $M_5$ जातः (for जातम्).

28 $^{a}$) $K_2$ $Ñ_3$ $B_{3.5}$ $D_1$ ईप्सन्नेव हि; $Ñ_2$ $B_{1.6}$ Da Dn $D_4$ इच्छन्नेव हि; $D_2$ °मानः स्व-. — $^{b}$) $K_{2.4}$ $Ñ_2$ $B_{1.3.5}$ D (except $Da_2$ $D_2$) $M_{6.8}$ कृतं (for कृत-). $T_1$ सुमारयन्; $G_1$ समानवै; M समानयेत् ($M_3$ °नयन्; $M_5$ °पयत्).

C. 1. 7959 S. 1. 220. 29 K. 1. 244. 56 प्रसह्य हृतवानद्य सुभद्रां मृत्युमात्मनः ॥ २९
कथं हि शिरसो मध्ये पदं तेन कृतं मम ।
मर्षयिष्यामि गोविन्द पादस्पर्शमिवोरगः ॥ ३०
अद्य निष्कौरवामेकः करिष्यामि वसुंधराम् ।
न हि मे मर्षणीयोऽयमर्जुनस्य व्यतिक्रमः ॥ ३१
तं तथा गर्जमानं तु मेघदुन्दुभिनिःस्वनम् ।
अन्वपद्यन्त ते सर्वे भोजवृष्ण्यन्धकास्तदा ॥ ३२

इति श्रीमहाभारते आदिपर्वणि द्वादशाधिकद्विशततमोऽध्यायः ॥ २१२ ॥ समाप्तं सुभद्राहरणपर्व ॥

# २१३

वैशंपायन उवाच ।
उक्तवन्तो यदा वाक्यमसकृत्सर्ववृष्णयः ।
ततोऽब्रवीद्वासुदेवो वाक्यं धर्मार्थसंहितम् ॥ १
नावमानं कुलस्यास्य गुडाकेशः प्रयुक्तवान् ।
संमानोऽभ्यधिकस्तेन प्रयुक्तोऽयमसंशयम् ॥ २
अर्थलुब्धान्न वः पार्थो मन्यते सात्वतान्सदा ।
स्वयंवरमनाधृष्यं मन्यते चापि पाण्डवः ॥ ३
प्रदानमपि कन्यायाः पशुवत्कोऽनुमंस्यते ।

— c) Ś1 Ñ1 D1 भवेन्नार्थी; T G °दर्थी. — d) K1.2 समाचरन्; S चरेद्बुधः.

29 a) S सोवमत्य. K3.4 Ñ1.2 V1 B3.5.6 Da Dn D2.4.5 तथास्माकम्; K3 च नः सर्वान्; B1 तथा चास्मान्; T2 G4 च्च नैवास्मान्; G1 च नास्मासु. D1 सोवमन्यत तानस्मान्. — b) S अवमत्य (for अना°). — c) K2 B6 (before corr.) Da2 D5 कृतवान्.

30 a) D5 ते; T2 G2–4 तु (for हि). T2 G2–4 सात्वतां मध्ये. — b) K0.2.3 Ñ2 B D (except D1) transp. पदं and कृतं. M5 महत् (for मम). T1 पादं संनिहितं मम; T2 G2–4 कृत (G2 °तः) प्रोद्वाहकः (G3 °कं) कथं. — After 30ab, T2 G (except G1) ins.:

2062* त्वया चेन्नाभ्यनुज्ञातो धर्षयिष्यति माधव ।
[ G5.6 मर्षयिष्यामि. ]

— c) N1 न सहिष्यामि; T2 G (except G1) न मर्षयिष्ये.

31 a) T2 G2–4 एतां; M उर्वीं (for एकः). — b) G1 M °मि न संशयः. — d) Ś1 K (except K2) Ñ1 D1.2.5 अर्जुनेन (Ś1 Ñ1 °नस्य) पराभवः. — After 31, T2 G (except G1) ins.:

2063* तमहं भ्रातृभिः सार्धं निहन्मि कुलपांसनम् ।

— After 31, M6–8 (erroneously) read 1. 213. 4a–5b !

32 Before 32, T G ins. वैशं. — a) S रौहिणेयं गर्जमानं. — b) D1.2 °गंभीर°. — c) Ś1 K1 D5 अभ्य°; M8 °वर्तंत. — d) Ś1 K1 Ñ1 B5.6 Da Dn3 D4.5 G5.6 तथा; T1 M ततः. T2 G3.4 °वृष्ण्यंधकेश्वराः.

Colophon. *Major parvan:* T2 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 K Ñ3 B Da Dn1.n2 D1.2.4.5 T2 G3–5 M3.5 सुभद्राहरण; T1 संभव. — *Adhy. name:* Ś1 K1 वृष्ण्यंधककोपः (K1 °कप्रकोपः); K0.3.4 D5 बलदेवक्रोधः (K0 °क्रोधनः; K3 °कोपः); T2 G3–5 बलभद्रकोपः (G5 °कोपनं); M5 सभाक्षोभः. — *Adhy. no.* (figures, words or both): Dn3 219; D4m 233; D5 170; T1 229; T2 G1.4–6 M 183; G2 181; G3 184. — *S'loka no.:* Dn 32; M3 63. — *Aggregate s'loka no.:* Dn2 7950.

## 213

1 Ś1 K (except K0) D2 S om. उवाच. — a) Ś1 K0.1.4 तदा वाक्यं; K2.3 Ñ2 B1.3 Dn1.n2 D4 T2 G3.4 यथा वीर्यं; B1m.5 D2 M5 यदा वीर्यं; Dn3 यथा वा°; D5 तथा वा°. — b) G1 M3.5 सर्वयादवाः. — d) K3 Ñ2.3 B D (except D1) °संयुतं. Ñ1 वाचां धर्मार्थसंहितां. — After 1, S ins.:

2064* मयोक्तं न श्रुतं पूर्वं सहितैः सर्वयादवैः ।
अतिक्रान्तमतिक्रान्तं न निवर्तति कर्हिचित् ।
शृणुध्वं सहिताः सर्वे मम वाक्यं सहेतुकम् ।

2 c) K (except K0.1) Da1 D1 सन्मानो. — d) K2 Dn3 D1.2.4.5 T G3.4 M6–8 °यमसंशयः; Ñ B3.6 Dn1.n2 °यं न संशयः; G2 धर्मसंश्रयः.

3 a) G5.6 अर्थं धर्मान्. K0.1.4 न नः; K2 मनः; Ñ1 स नः; D5 अयं; T2 G (except G1) च वः (for न वः).

4 G2 (hapl.) om. 4–5. M6–8 read 4a–5b after 1. 212. 31 ! — a) T1 एव; G1 M इह (for अपि). — b) K2.3 Ñ2.3 V1 B D G1 °मन्यते; T2 G3–6 M6–8 °मंस्यति. N1 पशुत्वान्न नु शस्यते. — d) G5.6 समानः पुरु°:

विक्रयं चाप्यपत्यस्य कः कुर्यात्पुरुषो भुवि ॥ ४
एतान्दोषांश्च कौन्तेयो दृष्टवानिति मे मतिः ।
अतः प्रसह्य हृतवान्कन्यां धर्मेण पाण्डवः ॥ ५
उचितश्चैव संबन्धः सुभद्रा च यशस्विनी ।
एष चापीदृशः पार्थः प्रसह्य हृतवानिति ॥ ६
भरतस्यान्वये जातं शंतनोश्च महात्मनः ।
कुन्तिभोजात्मजापुत्रं को बुभूषेत नार्जुनम् ॥ ७
न च पश्यामि यः पार्थं विक्रमेण पराजयेत् ।
अपि सर्वेषु लोकेषु सेन्द्ररुद्रेषु मारिष ॥ ८
स च नाम रथस्तादृङ्मदीयास्ते च वाजिनः ।
योद्धा पार्थश्च शीघ्रास्त्रः को नु तेन समो भवेत् ॥९
तमनुद्रुत्य सान्त्वेन परमेण धनंजयम् ।
निवर्तयध्वं संहृष्टा ममैषा परमा मतिः ॥ १०
यदि निर्जित्य वः पार्थो बलाद्गच्छेत्स्वकं पुरम् ।
प्रणश्येद्वो यशः सद्यो न तु सान्त्वे पराजयः ॥ ११
तच्छ्रुत्वा वासुदेवस्य तथा चक्रुर्जनाधिप ।
निवृत्तश्चार्जुनस्तत्र विवाहं कृतवांस्ततः ॥ १२
उषित्वा तत्र कौन्तेयः संवत्सरपराः क्षपाः ।
पुष्करेषु ततः शिष्टं कालं वर्तितवान्प्रभुः ।
पूर्णे तु द्वादशे वर्षे खाण्डवप्रस्थमाविशत् ॥ १३
अभिगम्य स राजानं विनयेन समाहितः ।
अभ्यर्च्य ब्राह्मणान्पार्थो द्रौपदीमभिजग्मिवान् ॥१४
तं द्रौपदी प्रत्युवाच प्रणयात्कुरुनन्दनम् ।
तत्रैव गच्छ कौन्तेय यत्र सा सात्वतात्मजा । G. 1. 7978 B. 1. 221. 17

---

5 G1 om. 5 (cf. v. l. 4). — c) Ñ1 Da कृतवान्; D5 हरणं; T3 G3.4 बलवान्.

6 Ś1 K1 om. 6. — a) T3 G (except G1) अपि (for एव). — b) Ñ2 B6 D5 सुभद्रां and °स्विनीं. M6.8 om. and M7 has lacuna for च यशस्विनी. — c) K0 B1 D1 एष वा; K4 एषा वा. T3 G (except G1) M5 एतस्याः (M5 एषोपि) सदृशः पार्थः. — d) K0.4 B5 T1 हृतः; T3 G M अतः (for इति).

7 a) K2 B5 T G2-4 जातः. — b) Ñ V1 B Da Dn शांतनोश्च. Ñ2 Dn D4 यशस्विनः. T1 G1 M शंतनोः पौत्रमद्य वै; T3 G2-4 शत्रुशात(G2.3 °स)नकृत्तथा; G5.6 शत्रुशातनमद्य वै. — d) K2 T3 G (except G1) M5 क्वा (for को). T1 बुभूषेच्च. Ś1 K1 को नु दूषितवानमुं. G1 corrupt.

8 a) K4 G1 तं (for च). T1 M (except M5) तं (for यः). — b) K2.3 Ñ2.3 B D (except D1.2.5) M5 विजयेत रणे बलात्; M6-8 °ण नु यो जयेत्. — After $8^{ab}$, Ñ1.2 B3 Dn D5 ins.:

2065* वर्जयित्वा विरूपाक्षं भगनेत्रहरं हरम् ।

— c) K1.3 लोके° सर्वै° (by transp.). — d) Ś1 K1 सेंद्ररुद्रवसुष्वपि; K4 सेंद्रैरपि च मा°; Ñ1 सेंद्ररूपेण मानवः; D1.2 सेंद्रैरपि सुरासुरैः; T3 G (except G1) सदेवमनुजेषु च (G5.6 °जेष्वपि).

9 a) M6-8 स च मानी. T3 G2-4 रथस्तावत्. — After $9^{ab}$, D4 (marg. *sec. m.*) S ins.:

2066* मम शस्त्राण्यशेषेण तूणी चाक्षयसायकौ ।

— c) T3 G (except G1) स (for च). — d) Ś1 K (except K2) D2.5 T1 कोर्जुनेन (D5 °नस्य); G2 कोन्यस्तेन.

10 a) B1 G3 तद् (for तम्). K2.3 Ñ2.3 B D T3 G4 अभिद्रुत्य (B5 अतिक्रम्य). — c) K2 Ñ2.3 V1 B Dn1.n2 D4 नि(Ñ2.3 Dn1.n2 न्य)वर्तयत. S हृष्टाः सर्वे निवर्तध्वं. — d) G1-3.4 (before corr.) °मा गतिः.

11 a) Ś1 K1 नः पार्थो. — b) K0.3.4 D5 एको गच्छेत्; G1 युद्धाद्ग°. D5 T3 G2-4 स्वयं पुरं. — c) T1 च; G1 नो (for वो). K4 यशः सर्वं. — d) K2 वः; D1 च (for तु). — After 11, S ins.:

2067* पितृष्वसायाः पुत्रो मे संबन्धं नार्हति द्विषाम् ।

12 Before 12, K2.3 T3 G (except G1) ins. वैशं°; D5 वैशं° उ°. — b) S तथा कर्तुं. Ś1 K1.4 Ñ1 V1 D2.5 G1 M3.5 नराधिप (D2.5 °पाः); K0 B6 Da M3 जनाधिपाः. — After $12^{ab}$, K4 (marg. *sec. m.*) D4 (suppl. fol. *sec. m.*) S (which latter om. $12^{c}$-$16^{d}$) ins. a passage given in App. I (No. 115). — d) K2 Ñ2.3 V1 B D (except D1.2.5) कृतवान्प्रभुः.

13 S om. 13 (cf. v. l. 12). — a) Ś1 K1 उषितस्तत्र. — After $13^{ab}$, N (except Ś1 K1) ins.:

2068* विहृत्य च यथाकामं पूजितो वृष्णिनन्दनैः ।

— c) K2 Ñ2.3 B5 Dn पुष्करे तु. K2 Ñ2 B D ततः शेषं. — e) Ś1 पूर्णे द्वादशवर्षे तु. — f) K2 Ñ2.3 V1 B D (except D1.2.5) °प्रस्थमागतः.

C. 1. 7979 B. 1. 221. 17 सुबद्धस्यापि भारस्य पूर्वबन्धः श्लथायते ॥ १५
तथा बहुविधं कृष्णां विलपन्तीं धनंजयः ।
सान्त्वयामास भूयश्च क्षमयामास चासकृत् ॥ १६
सुभद्रां त्वरमाणश्च रक्तकौशेयवाससम् ।
पार्थः प्रस्थापयामास कृत्वा गोपालिकावपुः ॥ १७
साधिकं तेन रूपेण शोभमाना यशस्विनी ।
भवनं श्रेष्ठमासाद्य वीरपत्नी वराङ्गना ।
ववन्दे पृथुताम्राक्षी पृथां भद्रा यशस्विनी ॥ १८
ततोऽभिगम्य त्वरिता पूर्णेन्दुसदृशानना ।
ववन्दे द्रौपदीं भद्रा प्रेष्याहमिति चाब्रवीत् ॥ १९
प्रत्युत्थाय च तां कृष्णा स्वसारं माधवस्य ताम् ।
सस्वजे चावदत्प्रीता निःसपत्नोऽस्तु ते पतिः ।
तथैव मुदिता भद्रा तामुवाचैवमस्त्विति ॥ २०
ततस्ते हृष्टमनसः पाण्डवेया महारथाः ।

---

14 Ś$_1$ S om. 14 (cf. v. l. 12). — a) Ñ$_2$ B$_5$ Dn D$_4$ च (for स). — b) Ñ$_2$ B$_6$ Dn$_{1.n2}$ D$_4$ नियमेन. B$_5$ समन्वितः. — d) K$_1$ Ñ$_1$ उपजग्मिवान्.

15 S om. 15 (cf. v. l. 12). — b) Ś$_1$ K$_1$ D$_{2.4}$ विनयात्. Ś$_1$ पांडुनंदनं. — Ś$_1$ K$_1$ om. 15$^{ef}$. — e) Ñ$_1$ स्वबंधस्यापि. N$_{1.3}$ V$_1$ भावस्य. — f) K$_4$ Ñ$_1$ Dn$_3$ D$_{2.5}$ पूर्वौ बंधः.

16 S om. 16 (cf. v. l. 12). — d) Ś$_1$ K$_3$ क्षामयामास; V$_1$ कामया°; D$_{1.2}$ शमया°.

17 a) T$_3$ G$_{3-6}$ त्वरमाणां. D$_4$ S तु (for च). D$_{1.2}$ सुभद्रां चानयामास. — b) Ś$_1$ K$_{1-3}$ Ñ$_1$ पीत-; D$_2$ क्षौम- (for रक्त-). Ko.$_2$ D$_2$ M$_3$ (*inf. lin.* as in text).$_{6-8}$ वाससीं; K$_{3.4}$ Ñ V$_1$ B Da Dn D$_4$ T$_3$ G$_{3-6}$ -वासिनीं° (for -वाससम्). — d) Ñ$_1$ कृत- (for कृत्वा). K$_3$ D$_4$ T$_3$ G गो(G$_2$ गौ)पालिकं वपुः.

18 b) D$_4$ T G$_4$ बभौ कृष्णसहोदरा. — After 18$^{ab}$, S ins.:

2069* गोपालिकामध्यगता प्रययौ व्रजिनं पुरम् ।
ततः पुरवरश्रेष्ठमिन्द्रप्रस्थं यशस्विनी ।
त्वरिता खाण्डवप्रस्थमाससाद विवेश च ।

G$_1$ om. 18$^{cd}$. — c) D$_4$ T$_1$ सा गृहद्वार°; T$_3$ G$_{2-4}$ सा पुरश्रेष्ठ°; G$_{5.6}$ M$_{6-8}$ सा गृहश्रेष्ठ°. — d) Ñ$_1$ नवांगना; D$_4$ S (G$_1$ om.) यशस्विनी. — e) Ñ$_1$ पृथिवी साक्षात् (for पृथु°). — f) D$_4$ T G$_4$ पांडवमातरं; G$_{1-3.5.6}$ M भद्रा पितृष्वसां. — After 18, K$_4$ Ñ$_{2.3}$ V$_1$ B D (except D$_1$) ins.:

2070* तां कुन्ती चारुसर्वाङ्गीमुपाजिघ्रत मूर्धनि ।
प्रीत्या परमया युक्ता आशीर्भिर्युञ्जतातुलाम् ।
[ (L. 2) K$_4$ °युंजती तदा; Ñ$_3$ V$_1$ आशिषोयुंक्त चातुला. ]

19 b) K$_2$ D$_4$ T$_1$ G (except G$_{1.4}$) °शाननां.

20 a) K$_2$ Ñ$_{2.3}$ B Da Dn D$_2$. तदा; K$_3$ ततः; D$_4$ G$_{2-6}$ M तु तां (for च तां). D$_4$ T$_3$ G$_{2-6}$ M देवीं (G$_2$ M$_{3.7.8}$ °वी) (for कृष्णा). T$_1$ गृहीत्वोत्थाप्य तां हस्ते; G$_1$ प्रत्युपस्थाय तां देवी. — b) Ś$_1$ Ñ$_1$ D$_{1.4}$ ह; Ko.$_{1.4}$ Ñ$_2$ V$_1$ Dn D$_5$ च (for ताम्). D$_4$ S कृष्णा कृष्णसहोदरीं (T$_1$ G$_{5.6}$ M °रां). — c) V$_1$ आलिंग्य. D$_1$ चाब्रवीत्; D$_4$ सावदत्; T$_3$ G (except G$_1$) चाभवत्. Ñ$_2$ B Da Dn D$_{4.5}$ परिष्वज्यावदत् (Da °ज्याब्रवीत्); D$_2$ परिष्वज्य तदा; M$_{3.5}$ सस्वजानावदत्. K$_2$ Ñ$_{2.3}$ V$_1$ B Da Dn D$_{4.5}$ M$_8$ प्रीत्या; D$_2$ कृष्णा (for प्रीता). — After 20$^{cd}$, T$_3$ G (except G$_1$) ins.:

2071* वीरसूर्भव भद्रे त्वं भव भर्तृप्रिया तथा ।

T$_3$ G$_{2-6}$ cont.: D$_4$ (marg. *sec. m.*) T$_1$ G$_1$ M ins. after 20$^{cd}$:

2072* ओजसा निभृता बह्वीरुवाच परमाशिषः ।
[ D$_4$ T$_1$ M निर्जिता; G$_1$ निर्मिता (for निभृता). ]

— f) D$_4$ S तथा (for एवम्). — After 20, D$_4$ (suppl. fol. *sec. m.*) S ins. a passage given in App. I (No. 116).

21 D$_4$ orig. reads 21 as in text, suppl. fol. *sec. m.* as in S. — b) D$_4$ (suppl. fol.) पांडवाश्च महा°. — For 21$^{cd}$, D$_4$ (suppl. fol.) S subst.:

2073* युधिष्ठिरमुखाः प्रीता बभूवुर्जनमेजय ।
कुन्ती च परमप्रीता कृष्णा च सततं तथा ।,

followed by a colophon (*adhy. no.:* D$_4$ suppl. fol. 235; T$_1$ 230; T$_3$ G$_{4-6}$ M 185; G$_1$ 184; G$_2$ 183; G$_3$ 186). — D$_4$ (suppl. fol. *sec. m.*) cont.:

वैशंपायनः ।

2074* अथ शुश्राव निर्वृत्ते वृष्णीनां परमोत्सवे ।
अर्जुनेन हृतां भद्रां शङ्खचक्रगदाधरः ।
पुरस्तादेव पौराणां संशयः समजायत ।
जानता वासुदेवेन वासितो भरतर्षभः ।
लोकस्य विदितं ह्यद्य पूर्वं विपृथुना यथा ।
सान्त्वयित्वाभ्यनुज्ञातो भद्रया सह संगतः ।
दित्सता सोदरां तस्मै पतत्रिवरकेतुना ।
अर्हते पुरुषेन्द्राय पार्थायायतलोचनाम् ।

कुन्ती च परमप्रीता बभूव जनमेजय ॥ २१
श्रुत्वा तु पुण्डरीकाक्षः संप्राप्तं स्वपुरोत्तमम् ।
अर्जुनं पाण्डवश्रेष्ठमिन्द्रप्रस्थगतं तदा ॥ २२
आजगाम विशुद्धात्मा सह रामेण केशवः ।
वृष्ण्यन्धकमहामात्रैः सह वीरैर्महारथैः ॥ २३
भ्रातृभिश्च कुमारैश्च योधैश्च शतशो वृतः ।
सैन्येन महता शौरिरभिगुप्तः परंतपः ॥ २४
तत्र दानपतिर्धीमानाजगाम महायशाः ।
अक्रूरो वृष्णिवीराणां सेनापतिररिंदमः ॥ २५
अनाधृष्टिर्महातेजा उद्धवश्च महायशाः ।
साक्षाद्बृहस्पतेः शिष्यो महाबुद्धिर्महायशाः ॥ २६
सत्यकः सात्यकिश्चैव कृतवर्मा च सात्वतः ।
प्रद्युम्नश्चैव साम्बश्च निशठः शङ्कुरेव च ॥ २७
चारुदेष्णश्च विक्रान्तो झिल्ली विपृथुरेव च ।
सारणश्च महाबाहुर्गदश्च विदुषां वरः ॥ २८
एते चान्ये च बहवो वृष्णिभोजान्धकास्तथा ।
आजग्मुः खाण्डवप्रस्थमादाय हरणं बहु ॥ २९
ततो युधिष्ठिरो राजा श्रुत्वा माधवमागतम् ।
प्रतिग्रहार्थं कृष्णस्य यमौ प्रास्थापयत्तदा ॥ ३०
ताभ्यां प्रतिगृहीतं तद्वृष्णिचक्रं समृद्धिमत् । C. 1. 7995 B. 1. 221. 35 K. 1. 247. 22

---

सत्कृत्य पाण्डवश्रेष्ठं प्रेषयामास चार्जुनम् ।
भद्रया सह बीभत्सुः प्रापितो व्रजिणः पुरम् ।

22 D4 reads 22 orig. as in text; the readings of the suppl. fol. are shown below. — a) Ś1 K (except K2) Ñ1 Dn8 D1.2.5 ज्ञात्वा तु; D4 (suppl. fol.) ततस्तु; T1 ततः स. — b) K0.4 Ñ2.3 B3.5 Dn1.n2 D2.5 स्वं; K1 सु- (for स्व-). N1 V1 समासं पुरुषोत्तमं; D4 (suppl. fol.) संप्रतस्थे पुरोत्तमं; T1 संप्रतीयात्पुरो°. — c) D4 T1 पुरुषश्रेष्ठं. — d) G (except G1.4) तथा. — After 22, D4 (suppl. fol. *sec. m.*) S ins.:

2075* यियासुः खाण्डवप्रस्थमामन्त्रयत केशवः ।
पूर्वं सत्कृत्य राजानमाहुकं मधुसूदनः ।
राजा विपृथुरक्रूरः संकर्षणविडूरथौ ।
पित्रा च पुरुषेन्द्रेण पुरस्तादभिमानितः ।
संप्रीतः प्रीयमाणेन वृष्णिराज्ञा जनार्दनः ।
अभिमन्त्र्याभ्यनुज्ञातो योजयामास वाहिनीम् ।
ततस्तु यानान्यासाद्य दाशार्हपुरवासिनाम् ।
सिंहनादः प्रहृष्टानां क्षणेन समपद्यत ।
योजयन्तः सदश्वांश्च यानयुग्यं रथांस्तथा ।
गजांश्च परमप्रीताः समपद्यन्त वृष्णयः ।

[ (L. 3) M (except M5) तथा (for राजा). D4 T1 संकर्षणभयेन ते; G3 M5 °गदोद्भवाः; M3.6-8 °भये सखौ. — (L. 4) D4 T1 G6 M पिता च (M5 पितेव). T3 G2-4 °दनुमोदितः; G5.6 °दनमानितः. — (L. 5) T3 G2-4 स प्रीतः. G1.5.6 वृष्णिराजा. — (L. 6) G1 ततस्तु यादवैः सार्धं. ]

23 S om. $23^{ab}$. — b) K2 Da रामेण सह (by transp.) — c) Ś1 K3.4 D1 G1 °सहामात्यैः; K0 D2.4.5 G2 °महामात्यैः; K2 °महाश्रेष्ठैः. — d) K2 B6 Da महावीरै(K2 °यैं)र्; T3 स हि वीरैर्; G2-4 सिंहवीरैर्.

24 b) Ñ2 B6 Dn D4.5 बहुभिर्वृतः; D2 सहशो वृ°.

25 a) G5.6 दानपरः. T1 G (except G3.4) M3 श्रीमान्. Ñ1 तत्रोदारमतिर्धीमान्. — b) T1 G1 M जगाम स (T1 G1 M7 सु-) महा°.

26 a) Ś1 K (except K0) D1 अनावृष्टिर्; T1 °धृतिर्; T3 G2-4 °धृष्यो; G5.6 °धृष्णिर्. — K1 (hapl.) om. $26^{cd}$. — d) K2 Da2 महात्मनः; K3 Ñ B Da1 Dn D1.4 T1 G1 M महामनाः.

27 ab) T3 G (except G1) सात्यकिश्च महाबाहुः कृतवर्मा महारथः. — c) K3 B (except B5) Dn1.n2 D1 शांबश्च. — d) Ś1 K1 निषधः; T3 G (except G1) निः(G2.3 नि)शंकुः (cf. v. l. 1. 211. 10c).

28 K3 (hapl.) om. $28^{ab}$. — b) Ś1 K1 दल्ली; K0 B6 T G झल्ली; Ñ3 जल्लिर्; V1 मंदी; D1 पृथुर्; D5 शिनिर् (for झिल्ली). K4 च पृथुरे°. M5 यल्सल्ली पृथुरे° (sic). — c) G2.5.6 महातेजा.

29 b) D1 भोजवृष्ण्यंधकास्; D2 वृष्णयश्चांधकास्. K2 B6 Da D1 तदा. — d) D2 भरणं प्रति; D5 द्रविणं बहु. Cd cites हरणं. — After 29, D4 (marg. *sec. m.*) S ins.:

2076* अन्वाहारं समादाय पृथग्वृष्णिपुरोगमाः ।
प्रययुः सिंहनादेन सुभद्रामवलोककाः ।
ते त्वदीर्घेण कालेन कृष्णेन सह यादवाः ।
पुरमासाद्य पार्थानां परां प्रीतिमवाप्नुवन् ।

[ (L. 1) D4 T3 G2-4 उपहारं. — (L. 2) T3 G2-4 अवलोकितुं. — (L. 3) T1 अदीर्घेणैव कालेन. ]

30 ab) K0 D5 श्रुत्वा राजा (by transp.). — d) Ś1 K1 यानं (for यमौ). Ś1 K2-4 Da D1 T1 G (except G3.4) M6-8 प्रस्थापयत्. T3 G (except G1) गृहात्.

31 a) K2 Ñ2.3 V1 B D T3 G तु (G1 तं) (for तद्).

C. 1. 7995 B. 1. 221. 35 K. 1. 274. 22 विवेश खाण्डवप्रस्थं पताकाध्वजशोभितम् ॥ ३१
सिक्तसंमृष्टपन्थानं पुष्पप्रकरशोभितम् ।
चन्दनस्य रसैः शीतैः पुण्यगन्धैर्निषेवितम् ॥ ३२
दह्यतागुरुणा चैव देशे देशे सुगन्धिना ।
सुसंमृष्टजनाकीर्णं वणिग्भिरुपशोभितम् ॥ ३३
प्रतिपेदे महाबाहुः सह रामेण केशवः ।
वृष्ण्यन्धकमहाभोजैः संवृतः पुरुषोत्तमः ॥ ३४
संपूज्यमानः पौरैश्च ब्राह्मणैश्च सहस्रशः ।
विवेश भवनं राज्ञः पुरंदरगृहोपमम् ॥ ३५
युधिष्ठिरस्तु रामेण समागच्छद्यथाविधि ।
मूर्ध्नि केशवमाघ्राय पर्यष्वजत बाहुना ॥ ३६
तं प्रीयमाणं कृष्णस्तु विनयेनाभ्यपूजयत् ।
भीमं च पुरुषव्याघ्रं विधिवत्प्रत्यपूजयत् ॥ ३७
तांश्च वृष्ण्यन्धकश्रेष्ठान्धर्मराजो युधिष्ठिरः ।
प्रतिजग्राह सत्कारैर्यथाविधि यथोपगम् ॥ ३८
गुरुवत्पूजयामास कांश्चित्कांश्चिद्वयस्यवत् ।
कांश्चिदभ्यवदत्प्रेम्णा कैश्चिदप्यभिवादितः ॥ ३९
ततो ददौ वासुदेवो जन्यार्थे धनमुत्तमम् ।
हरणं वै सुभद्राया ज्ञातिदेयं महायशाः ॥ ४०
रथानां काञ्चनाङ्गानां किङ्किणीजालमालिनाम् ।

— $^{b}$) $K_{2.3}$ $N_{2.3}$ B D (except $D_{1.2.5}$) $T_{3}$ $G_{2-4}$ $M_{3}$ महर्धिमत्. — $D_{1}$ om. $31^{c}$–$32^{a}$.

32 $D_{1}$ om. 32 (cf. v. l. 31); $T_{3}$ $G_{2-4}$ (hapl.) om. $32^{ab}$. — $^{a}$) $K_{3}$ संमृष्टसंसिक्तपथं; $Ñ_{2.3}$ $V_{1}$ B (except $B_{6}$) $Dn_{1}.n_{2}$ $D_{4}$ संमृष्टसिक्त° (by transp.). — $^{b}$) $B_{3}$ °शोभनं; $T_{1}$ °वासितं; $M_{3}$ °भूषितं. — $^{c}$) $T_{1}$ सुचंदनरसैः.

33 $^{a}$) $Ś_{1}$ दहता. Some MSS. (mostly S) अगरुणा. $K_{0.4}$ दह्यमानेनागु($K_{4}$ °ग)रुणा. — $^{b}$) $T_{3}$ G (except $G_{1}$) सुगंधितं ($G_{5.6}$ °नं). — After $33^{ab}$, $Ś_{1}$ K (except $K_{2}$) $N_{1.3}$ $V_{1}$ $D_{2.5}$ ins.:

2077* गन्धोद्दाममिवाकाशं बभूव जनमेजय ।

[ $Ś_{1}$ गंधोद्दिग्धम्; $K_{1}$ गंधोद्दिष्टम्; $D_{5}$ गंधादानम्. ]

— $^{c}$) $Ś_{1}$ $K_{1}$ असंसृष्ट°; $K_{2}$ $Ñ_{2.3}$ B D $T_{3}$ $G_{3.4}$ हृष्टपु($B_{1}m$ °तु)ष्ट° ($D_{2}$ सुविसृष्ट°); $T_{1}$ ससमृद्ध°.

34 $^{b}$) $Ś_{1}$ $K_{0.1.4}$ $N_{1}$ $D_{2.5}$ रामेण सह (by transp.). — $^{c}$) $K_{2}$ $Ñ_{2.3}$ $V_{1}$ B Dn $D_{2.4}$ °कैस्तथा भोजैः; Da °कस्तथा भोजैः; $T_{3}$ $G_{2-4}$ °कैर्महाबाहुः. — $^{d}$) $K_{2.3}$ $Ñ_{2.3}$ B D (except $D_{1.2.5}$) समेतः.

35 $^{a}$) $Ś_{1}$ $K_{0.1.4}$ $G_{2.5.6}$ तु; $D_{5}$ तैः (for च). — $^{b}$) $Ś_{1}$ तु (for च). $V_{1}$ °णैश्चैव सर्वशः.

36 $^{b}$) $Ś_{1}$ K (except $K_{2}$) $N_{1}$ $D_{1.2}$ °गम्य यथा°. — $^{d}$) $K_{2.3}$ $Ñ_{2.3}$ B D (except $D_{2}$) $T_{1}$ बाहुभ्यां परिषस्वजे; $T_{3}$ G (except $G_{5.6}$) परिष्वज्य च बा°; $M_{6-8}$ परिष्वजत बा°.

37 $^{a}$) $K_{2-4}$ N $V_{1}$ B D $T_{1}$ M प्रीयमाणः; $G_{1}$ पूजयानः. $K_{2}$ गोविंदं; $K_{3}$ N B Da Dn $D_{4.5}$ गोविंदो; $D_{2}$ कृष्णस्य. — $^{b}$) $Ś_{1}$ K (except $K_{2}$) $D_{2}$ विजयं प्रत्य($D_{2}$ पर्य)पूजयत्. — $K_{1}$ $N_{1.3}$ $D_{1}$ (hapl.) om. $37^{cd}$. — $^{d}$) $Ś_{1}$ पर्यपूजयत्; $G_{1}$ प्रतिपूज°.

38 $^{a}$) $K_{0.3.4}$ भोजवृ°. — $^{b}$) $K_{2}$ $N_{2.3}$ B D (except $D_{1.2.5}$) कुंतीपुत्रो युधि°. — $^{c}$) $Ś_{1}$ $K_{1}$ प्रीतिं ज°. — $^{d}$) $K_{2.3}$ $Ñ_{2.3}$ $V_{1}$ B Da Dn $D_{4.5}$ यथाग($Da_{1}$ °म)तं; $K_{4}$ $D_{1.2}$ T G (except $G_{1}$) यथोचितं; $Ñ_{1}$ यथावयः.

39 $^{a}$) $T_{1}$ विधिवत्पूज°. — $^{c}$) $K_{1}$ अभ्यद्रवत्; $T_{3}$ G (except $G_{1}$) चाभ्यवदत्. $T_{1}$ $G_{1.2}$ M प्रीतः (for प्रेम्णा). — $^{d}$) $K_{0}$ वाप्यभिवादितः; $K_{3.4}$ चाप्यभि°; $N_{1.3}$ °भिवंदितः. — After 39, $D_{4}$ (marg. *sec. m.*) S ins.:

2078* ततः पृथा च पार्थाश्च मुदिताः कृष्णया सह ।
पुण्डरीकाक्षमासाद्य बभूवुर्मुदितेन्द्रियाः ।
हर्षादभिगतौ दृष्ट्वा संकर्षणजनार्दनौ ।
बन्धुमन्तं पृथा पार्थं युधिष्ठिरममन्यत ।
ततः संकर्षणाक्रूरावप्रमेयावदीनवत् ।
भद्रवत्यै सुभद्रायै धनौघमुपजह्रतुः ।
प्रवालानि च वस्त्राणि भूषणानि सहस्रशः ।
कुथास्तरपरिस्तोमान्व्याघ्राजिनपुरस्कृतान् ।
विविधैश्चैव रत्नौघैर्दीप्तप्रभमजायत ।
शयनासनयानैश्च युधिष्ठिरनिवेशनम् ।
ततः प्रीतिकरो यूनां विवाहपरमोत्सवः ।
भद्रवत्यै सुभद्रायै सप्तरात्रमवर्तत ।

[ (L. 1) $D_{4}$ $T_{3}$ $G_{3-6}$ सहिताः (for मुदिताः). — (L. 5) $M_{3.5}$ अभीतवत् (for अदीन°). — (L. 7) $T_{1}$ $G_{1.2}$ हाराणि; M वज्राणि (for वस्त्राणि). — (L. 8) M व्यालाजिनपुर°. — (L. 9) $T_{3}$ $G_{3-6}$ तथाभरणरत्नौघैः. $M_{3}$ विविधानि च रत्नानि दीप्तमध्यमजाविकं. — (L. 11) $M_{3}$ नृणां (for यूनां). ]

40 $^{a}$) $K_{2}$ $Ñ_{2.3}$ B (except $B_{6}$) D (except $D_{2}$) तेषां (for ततो). $K_{2.3}$ $N_{2.3}$ B D (except $D_{2}$) हृषीकेशो (for वासु°). — $^{b}$) $Ś_{1}$ $K_{1}$ $N_{1}$ जन्यार्थं; $K_{2}$ $V_{1}$ $D_{2.4}$ (by corr.) $G_{2}$ कन्यार्थे ($K_{2}$ °र्थं). $K_{4}$ वरस्नेहार्थमुत्तमं. — $^{c}$) $K_{0.3.4}$ $D_{5}$ च (for वै). $Ś_{1}$ K (except $K_{2}$) सुभद्रायै.

41 $^{a}$) $D_{2}$ $G_{1}$ $M_{7}$ कांचनानां च. — $^{b}$) $Ś_{1}$ $K_{1}$

चतुर्युजामुपेतानां सूतैः कुशलसंमतैः ।
सहस्रं प्रददौ कृष्णो गवामयुतमेव च ॥ ४१
श्रीमान्माथुरदेश्यानां दोग्ध्रीणां पुण्यवर्चसाम् ।
वडवानां च शुभ्राणां चन्द्रांशुसमवर्चसाम् ।
ददौ जनार्दनः प्रीत्या सहस्रं हेमभूषणम् ॥ ४२
तथैवाश्वतरीणां च दान्तानां वातरंहसाम् ।
शतान्यञ्जनकेशीनां श्वेतानां पञ्च पञ्च च ॥ ४३
स्नापनोत्सादने चैव सुयुक्तं वयसान्वितम् ।
स्त्रीणां सहस्रं गौरीणां सुवेषाणां सुवर्चसाम् ॥ ४४
सुवर्णशतकण्ठीनामरोगाणां सुवाससाम् ।
परिचर्यासु दक्षाणां प्रददौ पुष्करेक्षणः ॥ ४५
कृताकृतस्य मुख्यस्य कनकस्याग्निवर्चसः ।
मनुष्यभारान्दाशार्हो ददौ दश जनार्दनः ॥ ४६
गजानां तु प्रभिन्नानां त्रिधा प्रस्रवतां मदम् । C. 1. 8013 B. 1. 221. 53 K. 1. 247. 46

°शोभिनां. — $^{c}$) Ś1 K1 चतुर्युजैरुपे°; B6 हस्त्यारोहैरुपे°. — $^{d}$) K2 Ñ2.3 B D (except D2.5) G1 कुशलशिक्षितैः; T1 परमसंमतैः. — After $41^{cd}$, T1 ins.:

2079* बाह्लीकसिन्धुजातानां काम्बोजानां शतं शतम् ।
हरणार्थं ददौ कृष्णस्तुरगाणां जनेश्वर ।

— $^{f}$) S नियुतम् (for अयुतम्).

42 $^{a}$) D2 उपाहृतान्यदे°; T1 M6–8 शुक्लवर्णसवत्सानां (T1 °सुवर्णानां); T3 G2–4 उपावृत्य (G2 °वर्त्यं; G3 °कृत्य) सहस्राणां; G1 शुद्धानां तु सुवंश्यानां; G5.6 M3.5 उपपाद्य (M3 शुक्लवर्षस्; M3 *inf. lin.* उपावर्त्यं) तु वश्यानां. — $^{b}$) Ñ1 श्वेतानां पुण्य°. — After $42^{ab}$, Ś1 K1 D2.5 ins.:

2080* ददौ पार्थाय शुद्धात्मा सहस्राण्येकविंशतिम् ।

D5 cont.: Ś1 K1–3 (all om. line 2) Ñ1.2 V1 D2 ins. after 42:

2081* गजानां नित्यमत्तानां सादिभिः समधिष्ठिताम् ।
मेघाभानां ददौ कृष्णः सहस्रमसितेक्षणः ।

— After $42^{ab}$, S reads 47–48. B3 (hapl.) om. $42^{cd}$; M5 om. $42^{cdef}$. — $^{c}$) Ś1 K1 विशुद्धानां; Ko.4 सुशुभ्राणां; K2 Ñ3.3 B1.6 D (except D1.2) च शुद्धानां. — $^{d}$) M3 °समतेजसां. — $^{f}$) K1 Ñ2 B6 D (except D4.5) °भूषितं; K3 °भूषिणां; S (M5 om.) °मालिनां. — After 42, Ś1 K1–3 (all om. line 2) Ñ1.2 V1 D2 ins. 2081*; while S ins.:

2082* काम्बोजारट्टबाह्लीकसिन्धुजातांश्च भारत ।
सुवर्णकृतसंनाहान्घण्टानादविनादितान् ।
श्वेतचामरसंछन्नान्सर्वशस्त्रैरलंकृतान् ।
जात्यश्वानां सहस्राणि पञ्चाशत्प्रददौ तदा ।

T1 G1 cont.:

2083* हयानां चन्द्रसंकाशं श्यामकर्णान्ददौ शतम् ।

43 $^{a}$) D1 गजानां नित्यमत्तानां (= prior half of line 1 of 2081*). — $^{b}$) Ko.4 दांतानां च सुवर्चसां. — $^{c}$) S (except G3) °केशानां. — $^{d}$) Ś1 K1 सुता°; T3 G3.4 शता° (for श्वेता°). — After 43, S (except T1 M5) ins.:

2084* शिबिकानां सहस्रं च प्रददौ मधुसूदनः ।

T3 G2 (om. line 2).3–6 cont.:

2085* प्राच्यानां च प्रतीच्यानां बाह्लीकानां जनार्दनः ।
ददौ शतसहस्रं वै कन्याधनमनुत्तमम् ।

[ (L. 1) G5 कृष्णानामपि चाश्वानां (for prior half). ]

44 T1 om. $44^{a}$–$45^{b}$. — $^{a}$) Ko.3 D5 T3 G3–6 M3.5 स्ना(T3 G3.4 स्न)पनाच्छादने; K4 स्नापनोद्वर्तने; B (B5 marg.) स्नानपा(B5 orig. °दा)नोत्सवे; D2 स्नानपानोदनैश्. G2 सर्वकर्मणि निष्क्रांतं (cf. 2086*). Cd cites उत्सादनं. — After $44^{a}$, T3 G3–6 ins.:

2086* भोजने पाचने तथा ।
आधानोद्वासने चैव प्रेरणे यत्र यत्र च ।
अनुलेपे च गन्धानां पेषणे च विचक्षणम् ।
सर्वकर्मणि निष्णातं.

— $^{b}$) K3 V1 D2 संयुक्तं; Ñ2 B3 Da Dn D4 प्रयुक्तं; S (T1 om.) युक्तं च. — K3 (? hapl.) om. $44^{d}$–$45^{c}$. — $^{d}$) Ś1 K1 B D1 सुवेशानां; T3 G2–4 सुवेणीनां; M5 सर्वेषां तु.

45 K3 om. $45^{abc}$ (cf. v. l. 44); D2 T G2–4 om. $45^{ab}$. — $^{a}$) Ñ3 B (except B5) Da सुवर्णनिष्क°; G5.6 °कीर्णानां; M3 °कर्णानां. — $^{b}$) Ñ2 B3.5 Dn D5 अरोमाणां. Ko.4 G1 सुवर्चसां; K2 Ñ2.3 V1 B D (D2 om.) G5.6 स्वलंकृतां (K2 B1.3.6 Da2 D4 °तं). — After 45, N ins.:

2087* पृष्ठ्यानामपि चाश्वानां बाह्लिजानां जनार्दनः ।
ददौ शतसहस्राख्यं कन्याधनमनुत्तमम् ।

[ (L. 1) Ś1 कृष्णानाम्; K2 पृथूनाम्; Ñ1 V1 D1.2.5 पुष्टानाम्; B5 श्रेष्ठानाम्; Cd पृष्ठ्यानाम् (as above). Ko.2.3 Ñ D (except Da) बाह्लिकानां. — (L. 2) K3 Da °सहस्राक्षं; N3 B3.6 D1.5 °सहस्राणि. Line 2 = line 2 of 2085*.

46 Ko.3 om. 46. — $^{b}$) K2 Ñ3 B5.6 S °स्य सुवर्चसः. — $^{c}$) K2 अतुल्यभारान्; T3 G2–4 महार्हभा°; M3 हिरण्यभा°; M6–8 मनुष्यसारान्. — $^{d}$) S प्रददौ प्रयुतं तदा. — After 46, S (T1 M om. line 5) ins.:

2088* भूषणानां तु मुख्यानां शतभारं ददौ धनम् ।

स चिन्तयन्नभ्यगच्छद्बहुलप्रसवान्खगान् ।
शार्ङ्गिकां शार्ङ्गको भूत्वा जरितां समुपेयिवान् ॥ १६
तस्यां पुत्रानजनयच्चतुरो ब्रह्मवादिनः ।
तानपास्य स तत्रैव जगाम लपितां प्रति ।
बालान्सुतानण्डगतान्मात्रा सह मुनिर्वने ॥ १७
तस्मिन्गते महाभागे लपितां प्रति भारत ।
अपत्यस्नेहसंविग्ना जरिता बह्वचिन्तयत् ॥ १८
तेन त्यक्तानसंत्याज्यानृषीनण्डगतान्वने ।
नाजहत्पुत्रकानार्ता जरिता खाण्डवे नृप ।
बभार चैतान्संजातान्स्ववृत्त्या स्नेहविक्लवा ॥ १९
ततोऽग्निं खाण्डवं दग्धुमायान्तं दृष्टवानृषिः ।
मन्दपालश्चरंस्तस्मिन्वने लपितया सह ॥ २०

तं संकल्पं विदित्वास्य ज्ञात्वा पुत्रांश्च बालकान् ।
सोऽभितुष्टाव विप्रर्षिर्ब्राह्मणो जातवेदसम् ।
पुत्रान्परिददद्भीतो लोकपालं महौजसम् ॥ २१

मन्दपाल उवाच ।

त्वमग्ने सर्वदेवानां मुखं त्वमसि हव्यवाट् ।
त्वमन्तः सर्वभूतानां गूढश्चरसि पावक ॥ २२
त्वामेकमाहुः कवयस्त्वामाहुस्त्रिविधं पुनः ।
त्वामष्टधा कल्पयित्वा यज्ञवाहमकल्पयन् ॥ २३
त्वया सृष्टमिदं विश्वं वदन्ति परमर्षयः ।
त्वदृते हि जगत्कृत्स्नं सद्यो न स्याद्धुताशन ॥ २४
तुभ्यं कृत्वा नमो विप्राः स्वकर्मविजितां गतिम् ।
गच्छन्ति सह पत्नीभिः सुतैरपि च शाश्वतीम् ॥ २५ C. 1. 8356 B. 1. 229. 27 K. 1. 235. 27

— e) K3 D2 G5.6 M3 शार्ङ्कां. K (except K3) Ñ V1 B (except B1) Da Dn D4.5 T G2–4 M5 शार्ङ्गिको; G1 शार्ङ्गिका.

17 $^{ab}$) D1.2 स जन° (for अजन°). G5.6 स तस्यां जनयामास चतुरः शार्ङ्गकानृषीन्. — c) K1 G5.6 च; M5 तु (for स). — d) T1 तदा (for प्रति). — e) Ñ2.3 Dn G1 स तान् (for सुतान्). T3 G2–4 अंडगर्भान्; G5.6 अंडभूतान्. — f) K3 Ñ V1 B D (except D5) transp. मात्रा and सह.

18 G1 (hapl.) om. $18^{a}$–$19^{b}$. — c) K2.4 Ñ2 B1 (m as in text).5.6 Dn D4.5 °संयुक्ता. — d) V1 शार्ङ्गी पुत्रानचिंत°.

19 D1 om. 19; G1 om. $19^{ab}$ (cf. v. l. 18). — c) K1 Ñ1 V1 G1.2.5 M3.5 नाजहात्; K2 Ñ2.3 B D (D1 om.) न जहौ. K0.4 °कान्माता; K1 °कामार्ता; K2.3 Ñ V1 B D (D1 om.) °शोकार्ता; T1 G1 M °कांस्तांस्तु; T3 G2–6 °कानार्तान्. — d) K2.3 Ñ2.3 B D (D1 om.) सुतान् (for नृप). — e) M6–8 एव (for एतान्). — f) T1 G2 संवृत्य; T3 G3–6 सुवृत्त्या.

20 b) M7 भगवान् (for दृष्ट°). K2 B1 मुनिः (for ऋषिः). — $^{cd}$) K1 transp. चरन् and वने. K3 ततः (for वने).

21 a) T1 G1 M transp. तं and संकल्पं. K2.3 Ñ2.3 B D (except D1.2) °त्वाग्नेर्; T1 °त्वा तु; G1 M (except M3) °त्वाथ. — b) G1 M तु (for च). T3 G2–6 °त्वा बालांश्च पुत्रकान्. — T3 G2–5 subst. for $21^{cdef}$: G6 ins. after $21^{ab}$:

2141* महर्षिर्मन्दपालोऽसौ वधात्स्तोतुं प्रचक्रमे ।
[ G6 वह्निं (for वधात्). ]

— c) Ś1 K (except K2) Ñ1 V1 B6 Da D1.2.5 सोऽग्निं (for सोऽभि-). — d) M7 ब्रह्मज्ञो (for ब्राह्मणो). — K2 om. $21^{ef}$. — e) Ś1 परिदधन्; K0 G1 परिदधद्; K1 प्रतिवधन्; K3 परिदहाद्; Ñ V1 B Da Dn D2.4 T1 प्रतिवदन्; G6 प्रतिददौ. D1 पुत्रान्संप्रति भीतो वै; D5 स्वपुत्रदाहाद्भीतोयं. — f) T1 G1 M °ले महौजसि.

22 Ś1 K1 D2 S om. उवाच. — a) Ś1 V1 D1 सर्वभूतानां; K2 Ñ2.3 B Da Dn D4 T1 G5.6 सर्वलोकानां. — D1.2 (hapl.) om. $22^{bc}$. — b) M6–8 हव्यभुक्. — $22^{cd}$ = (var.) 1. 5. $23^{ab}$. — d) K3 D1.2 M3 अंतः; T3 G2–4 गूढं; Cd as in text. T3 G2–4 जानासि (for चरसि). B5 (m as in text) हव्यवाट्; B6 पुत्रक; M6–8 साक्षिवत् (for पावक).

23 a) T3 G (except G1) मुनयः (for कवयः). — b) T1 एव (for आहुः). T3 G (except G1) त्वामेवाहुस्त्रिधा पुनः. — d) S यज्ञवाटम् (G1 यज्ञे भूतान्). K1 S (except G5.6 M3.5) °ल्पयत्.

24 a) K0.3.4 Ñ1 D1.2 त्वयि. K0.4 Ñ1 D1.2 सर्वं; K3 B3 विश्वं (for सृष्टं). Ñ2.3 V1 B1.5.6 Da Dn D4.5 transp. सृष्टं and विश्वं. K3 T3 G सर्वं; B3 श्रेष्ठ (for विश्वं). — c) T3 G2–4 त्वां (for त्वद्). T3 G (except G1) अपि; M6–8 अति (for हि). D5 S सर्वं (for कृत्स्नं). — d) K2 Ñ V1 B D T G (except G1) नश्येत् (for न स्यात्).

25 b) V1 D1.2.5 G5.6 °विहितां; T3 G2–4 °विदितां.

C. 1. 8357 B. 1. 229. 27 K. 1. 255. 27 त्वामग्ने जलदानाहुः खे विषक्तान्सविद्युतः ।
दहन्ति सर्वभूतानि त्वत्तो निष्क्रम्य हायनाः ॥ २६
जातवेदस्त्वयैवेयं विश्वसृष्टिर्महाद्युते ।
तवैव कर्म विहितं भूतं सर्वं चराचरम् ॥ २७
त्वयापो विहिताः पूर्वं त्वयि सर्वमिदं जगत् ।
त्वयि हव्यं च कव्यं च यथावत्संप्रतिष्ठितम् ॥ २८
अग्ने त्वमेव ज्वलनस्त्वं धाता त्वं बृहस्पतिः ।
त्वमश्विनौ यमौ मित्रः सोमस्त्वमसि चानिलः ॥२९

वैशंपायन उवाच ।
एवं स्तुतस्ततस्तेन मन्दपालेन पावकः ।
तुतोष तस्य नृपते मुनेरमिततेजसः ।
उवाच चैनं प्रीतात्मा किमिष्टं करवाणि ते ॥ ३०
तमब्रवीन्मन्दपालः प्राञ्जलिर्हव्यवाहनम् ।
प्रदहन्खाण्डवं दावं मम पुत्रान्विसर्जय ॥ ३१
तथेति तत्प्रतिश्रुत्य भगवान्हव्यवाहनः ।
खाण्डवे तेन कालेन प्रजज्वाल दिधक्षया ॥ ३२

इति श्रीमहाभारते आदिपर्वणि विंशत्यधिकद्विशततमोऽध्यायः ॥ २२० ॥

— c) M6-8 अगच्छत् (sic) (for गच्छन्ति). — d) T1 G1 M पुत्रैर् (for सुतैर्).

26 a) T3 G3-4 एके (for अग्ने). — c) D1 द्युतिश्च; T1 निघ्नंति (for दहन्ति). — d) K1 निर्गत्य; Ñ1 D1.2 निःसृत्य; B5 निर्गम्य; T1 अनुसृत्य. Ś1 K (except K2) Cd हायनैः; Ñ V1 B D हेतयः; G2 (? orig. gloss) चार्चिषाः.

27 a) K2 Ñ2.3 V1 B Da Dn D1.4 T3 G (except G1) त्वयैवेदं; K4 Ñ1 D2 तथैवेयं. — b) K2 Ñ2.3 V1 B D (except D2.5) T3 G (except G1) विश्वं सृष्टं (for विश्वसृष्टिर्). — c) K2.4 V1 तथैव; Ñ1 तत्रैव. K2 transp. कर्म and विहितं. — d) T1 कर्म (for सर्वं).

28 a) K3 B (except B5) Da D4.5 त्वय्यापो; T1 त्वयोप-; G1 त्वया हि. — c) Ś1 K1 त्वत्तो (for त्वयि). — d) T3 G2-4 संप्रकीर्तितं.

29 a) Ś1 K1 अग्निस्; K4 Ñ1 V1 D1.2 अग्नेस्. V1 दहनः (for ज्वलनः). K2 Ñ2.3 B Da Dn D4.5 त्वमेव दहनो (K2 ज्वलनो) देव. — b) D1.2 प्रजापतिः; Cd बृह° (as in text). K4 त्वं विधाता बृह°. — c) Ś1 K (except K2) Ñ1 V1 D1.2 Cd यमः सूर्यः; B1.3 Da2 Dn3 T1 M3 यमो मित्रः; T3 G2-4 यमौ चित्रः; G1 यमौ विप्र (for यमौ मित्रः). — d) Ś1 K0 Dn3 D2 T3 G (except G1) चानलः (K0 °निल; Dn3 °नल); Cd as in text. D1 सोमसिद्धं च चानलः (sic). — After 29, K0.3.4 D4 (marg. sec. m.).5 ins.:

2142* ब्रह्मा भवान्समुत्तस्थौ स्थितिहेतुर्जनार्दनः ।
प्रलये चैव कालाग्नी रुद्ररूपी विभावसुः ।
जरायुणावृतं गर्भं पासि देव जगत्पते ।
त्वमात्मा जगतः स्तुत्यो देवदेव नमोऽस्तु ते ।

[ (L. 1) D4.5 समुत्पत्तौ and स्थितिहेतोर्. — (L. 2) D4 प्रतिष्ठितः; D5 विभावसो. — (L. 4) K3 देव धर्म. ] — T1, on the other hand, ins. after 29:

2143* मम पुत्रांश्च पौत्रांश्च पत्नीं रक्ष हुताशन ।
गृहं क्षेत्रं पशून्रक्ष रक्ष मां सर्व सर्वदा ।

30 Ś1 K1.3 S om. उवाच. — a) K2 Ñ2.3 V1 B Da Dn D4.5 तदा तेन; M3.5 ततः प्रीतः. D1 T3 G (except G1.2) एवं स (D1 च) संस्तुतस्तेन. — b) B1 चानलः (for पावकः). — c) G1 M हव्यवाहस्तु (for तुतोष तस्य). K3 transp. तस्य and नृपते. T1 नृपते प्रीतिहोत्रः स. — d) Da अपि च (for अमित-). — f) Ñ1 अहं; D1.2 G1 इदं (for इष्टं).

31 G2 (hapl.) om. 31c–32b. — c) T3 G3-6 संदहन्खांडवप्रस्थं. — d) Ś1 K (except K3) विवर्जयेः; B1 G5 विसर्जयेः. — After 31, T1 ins. (cf. 2143*):

2144* भार्यां रक्ष गृहं रक्ष पशुं मे रक्ष सर्वदा ।
पतन्तु हेतयः सर्वे स्वन्यदस्मत्तवाभिभो ।
सर्वत्र सर्वदास्माकं शिवो भव हुताशन ।

32 G2 om. 32ab (cf. v. l. 31). — Before 32, S (except M3; G2 om. 32ab) ins. वैशं°. — a) K0.4 D5 स तथेति; K2 तथेति सं; K3 B3.5 Da T1 तथेति तं. K0.3.4 V1 प्रतिज्ञाय. — c) Ś1 T1 G6 M खांडवं. — d) K0.4 Da दिदृक्षया; G1 M (except M3) बुभुक्षया.

Colophon om. in T1 M5. — *Major parvan:* T3 G M3.6-8 संभव° (for आदि°). — *Sub-parvan:* Ś1 K0-3 Ñ3 B Da Dn1.n2 D1.2.4.5 M3 खांडवदाह; to it Ś1 K0.3 B3 Da D5 M3 add शार्ङ्गको(B3 Da1 D5 शार्ङ्गों)पाख्यान. K1 (om. the sub-parvan name) mentions only शार्ङ्गकोपाख्यान. — *Adhy. name:* Ś1 K1 मंदपालस्यापत्यचिंता. — *Adhy. no.* (figures, words or both): Dn3 228; D4m 245; D5 28; T3 G4-6 M3.6-8 195; G1 194; G2 193; G3 198. — *S'loka no.:* Da1 24; Dn 33; M3 34. — *Aggregate s'loka no.:* Dn2 8333.

## २२१

वैशंपायन उवाच ।
ततः प्रज्वलिते शुक्रे शार्ङ्गकास्ते सुदुःखिताः ।
व्यथिताः परमोद्विग्ना नाधिजग्मुः परायणम् ॥ १
निशाम्य पुत्रकान्बालान्माता तेषां तपस्विनी ।
जरिता दुःखसंतप्ता विललाप नरेश्वर ॥ २
अयमग्निर्दहन्कक्षमित आयाति भीषणः ।
जगत्संदीपयन्भीमो मम दुःखविवर्धनः ॥ ३
इमे च मां कर्षयन्ति शिशवो मन्दचेतसः ।
अबर्हाश्चरणैर्हीनाः पूर्वेषां नः परायणम् ।
त्रासयंश्चायमायाति लेलिहानो महीरुहान् ॥ ४
अशक्तिमत्त्वाच्च सुता न शक्ताः सरणे मम ।
आदाय च न शक्तास्मि पुत्रान्सरितुमन्यतः ॥ ५
न च त्यक्तुमहं शक्ता हृदयं दूयतीव मे ।
कं नु जह्यामहं पुत्रं कमादाय व्रजाम्यहम् ॥ ६
किं नु मे स्यात्कृतं कृत्वा मन्यध्वं पुत्रकाः कथम् ।
चिन्तयाना विमोक्षं वो नाधिगच्छामि किंचन ।
छादयित्वा च वो गात्रैः करिष्ये मरणं सह ॥ ७
जरितारौ कुलं हीदं ज्येष्ठत्वेन प्रतिष्ठितम् ।
सारिसृक्कः प्रजायेत पितॄणां कुलवर्धनः ॥ ८
स्तम्बमित्रस्तपः कुर्याद्द्रोणो ब्रह्मविदुत्तमः । C. 1. 8378 B. 1. 230. 10 K. 1. 253. 10

---

**221**

1 Ś1 K1.3 S om. उवाच (T1 om. the ref.). — a) K2-4 Ñ2.3 V1 B D वह्नौ; Ñ1 शोचौ; Cd शुक्रे (as in text). — b) Some MSS. शार्ङ्गि°. — c) T3 G (except G1) बभूवुः (for व्यथिताः). — d) G5.6 नागच्छंत (for नाधि°).

2 a) Ś1 K1 Ñ V1 B D T3 G2-4 M5 निशम्य; Cd as in text. D1.2 T1 बालकान्पुत्रान् (for पुत्रकान्बा°). — b) Ś1 अथैषां; K1 T1 G1 M चैषां (for तेषां). K3 यशस्विनी; Cd तप° (as in text). — c) K2 T3 G2-6 पुत्रशोकार्ता; K3 B1.3.5 D (except D1.2.5) दुःखशोकार्ता; Ñ2.3 V1 B6 T1 G1 M शोकदुःखार्ता. — d) Ś1 V1 D5 जनेश्वर; K2.3 Ñ2.3 B Da Dn D4 T3 G (except G1) सुदुःखिता; D1.2 आकुलेंद्रिया.

3 Before 3, Ś1 K1 G1.5.6 M ins. जरिता; K0.2-4 N V1 B D जरितोवाच. — a) T1 अखिलं निर्दं°. — b) K1 चायाति. T3 G3.4 चोष्मणा. — c) Ś1 K1.3 स दीप°; K4 संभीषयन्; D2 स्वं दीप°; M3 संताप°. — d) D2 दुःखं विवर्धयन्.

4 a) T1 [ऽ]पि (for च). Ś1 K1.4 Ñ1 मा (for मां). T1 M मार्गयंतीह; T3 G कर्षयंतीह (G1 शार्ङ्गी आयांति) (for मां कर्ष°). Cd कर्शयंति; Devp कर्ष°(as in text). — M7 om. 4c-5b. — d) Ñ V1 B D G3 परायणाः; Cd as in text. — e) K0.4 D4 नाशयन् (for त्रासयन्). N1 Dn3 च समायाति; T3 G2-4 सर्वभूतानि (for चायमा°).

5 M7 om. 5ab (cf. v. l. 4). — a) K2.3 Ñ2.3 V1 B D अजातपक्षाश्च; Ñ1 अशक्तिमंतश्च. T G (except G1.2) M3 सुतान्. — b) Ś1 K1 अशक्ताः; T3 G (except G1.2) M3 अशक्तान्. T1 अशक्तान्स्वस्वकर्मणि. — c) T3 G2-4 आदातुं. G5.6 तान् (for च). K2 Ñ2.3 B (except B6) D (except Da) G1 M शक्नोमि. K0.3.4 अशक्तास्त्वा(K0 न शक्ता वा)हमादाय. — d) Ñ1 वै गंतुम्; Ñ2.3 V1 B1.3.5 Dn D1.5 T1 तरितुम्; D4 त्वरितुम्; B6 आगंतुम्; G1 त्वरितम्. K2 Ñ2.3 V1 B (except B6) Dn D4.5 आत्मना; D1.2 S अंततः. K0.3.4 क्वचिद्गंतुमितः सुतान्; Nilp निःसारयितुमंततः. Cd cites निःसरितुं and अंततः.

6 a) D1.2 न तु त्यक्तुमशक्ता च. — b) Ś1 K1 दहति; K0 V1 D1.2.5 दीर्यते; Ñ1 B1.5 दीर्यति; T3 G3.4 द्रवति (for दूयति). K0 V1 D1.2 च मे; D5 मम (for इव मे). — After 6ab, K0.3.4 D4(marg. *sec. m.*).5 ins.:

2145* कथं प्रदीप्ताज्ज्वलनाद्विमुच्येरन्सुता मम ।
मन्दभाग्या सपुत्राहं किं करिष्यामि शोचती ।

— c) K1 B6 D2 G6 M5.7 किं नु; K2 किं तु; K3 Ñ2.3 V1 B5 Da1 Dn D1.5 T3 G1.3.4 कं तु; G2 कथं. Cd cites नु (वितर्के). T3 G (except G1) त्यज्याम्यहं; M6-8 जह्याम्यहं. — d) G3.4 (before corr.) प्रयाम्यहं.

7 T3 G2-4 om. 7ab. — a) V1 दृष्टं (for कृतं). Ñ1.3 B3.6 D1 कृत्यं; B1.5 Da कर्म; Dn D3.4 कृते (for कृत्वा). — b) K2 Ñ3 B Dn D3.4 किं वा मन्यत पुत्रकाः. — c) Ñ1 D1.2 चिंतयंती. G5.6 अपि (for वि-). Ś1 S वै (for वो). — e) K3 Ñ2.3 V1 B D (except D1.2.4) छादयिष्यामि; S °त्वा हि. — f) Ś1 K1 त्विह (for सह).

C. 1. 8378 B. 1. 230. 10 K. 1. 256. 10 इत्येवमुक्त्वा प्रययौ पिता वो निर्घृणः पुरा ॥ ९
कमुपादाय शक्येत गन्तुं कस्यापदुत्तमा ।
किं नु कृत्वा कृतं कार्यं भवेदिति च विह्वला ॥१०
नापश्यत्स्वधिया मोक्षं स्वसुतानां तदानलात् ।
एवं ब्रुवन्तीं शार्ङ्गास्ते प्रत्यूचुरथ मातरम् ॥ ११
स्नेहमुत्सृज्य मातस्त्वं पत यत्र न हव्यवाट् ।
अस्मासु हि विनष्टेषु भवितारः सुतास्तव ।
त्वयि मातर्विनष्टायां न नः स्यात्कुलसंततिः ॥ १२
अन्ववेक्ष्यैतदुभयं क्षमं स्याद्यत्कुलस्य नः ।
तद्वै कर्तुं परः कालो मातरेष भवेत्तव ॥ १३
मा वै कुलविनाशाय स्नेहं कार्षीः सुतेषु नः ।
न हीदं कर्म मोघं स्याल्लोककामस्य नः पितुः ॥ १४
जरितोवाच ।
इदमाखोर्बिलं भूमौ वृक्षस्यास्य समीपतः ।
तदाविशध्वं त्वरिता वह्नेरत्र न वो भयम् ॥ १५
ततोऽहं पांसुना छिद्रमपिधास्यामि पुत्रकाः ।
एवं प्रतिकृतं मन्ये ज्वलतः कृष्णवर्त्मनः ॥ १६
तत एष्याम्यतीतेऽग्नौ विहर्तुं पांसुसंचयम् ।
रोचतामेष वोपायो विमोक्षाय हुताशनात् ॥ १७
शार्ङ्गका ऊचुः ।
अबर्हान्मांसभूतान्नः क्रव्यादाखुर्विनाशयेत् ।
पश्यमाना भयमिदं न शक्ष्यामो निषेवितुम् ॥ १८

8 a) Ś1 K1 T1 जरितारिः; G1 जरितानां. K1.3 हीनं; K2 Ñ2.3 V1 B D (except D1.2.5) G1 ह्येतत्; K4 चेदं; G2 हीति. — b) Da श्रेष्ठत्वेन; T1 G2 °त्वे च; T3 G3.4 °ष्ठ एव; G1 °त्वे तत्; G5 M3 °ष्ठे त्वेव; G6 M5–8 °ष्ठे त्वेवं. Ś1 K0.3.4 D1.2.5 प्रकल्पितं; K1 °कल्पयेत्. — c) Ś1 सारिस्वकः; K0.3.4 सारिसृक्षः; K1 शरिसृकः; K2 सारिसृकः; Ñ V1 B1.3.6 Da1 Dn D2.4.5 सारिसृक्कः; B5 T3 G3.4 M3.5 शारिसृक्कः; D1 सारितर्कैः; T1 सारीसृक्कः; G1.2 शारी°; G5.6 M6–8 शारि°: only Da2 exactly as in text! The variants of this name are ignored in the sequel. — d) K3.4 D5 वंशवर्धनः; V1 कुलभूषणः.

9 b) K2 Ñ2.3 B D (except D1.2.5) ब्रह्मविदां वरः. — d) Ñ3 B6 T3 G (except G1) वै (for वो). — After 9, S ins.:

2146* सहैव चरितुं बालैर्न शक्नोमि तपोवने ।

[ G1 M बालाः. T3 G2–4 शक्नोति. T1 G1 तपोवनात्. M वने त्वपितया सह (for the posterior half). ]

10 a) Ñ1 शक्येहं; Ñ2.3 B6 D (except D2) शक्येयं; T1 शक्नोमि. — b) V1 B Da तर्तुं (Da2 कर्तुं) (for गन्तुं). K1 कस्यापदं ततः; Ñ V1 B D (except D2) कष्टापदुत्तमा. — c) Cf. 7a. K2–4 Ñ1 Dn1.n3 D2.5 G2 तु (for नु). Ś1 K (except K2) Ñ1 B3 D1.2.5 मे स्यात् (for कृत्वा). T3 G3.4 कथं (for कृतं).

11 a) K4 जरिता; B5.6 Da M5 सुधिया; T3 G3.4 सा धिया; G5.6 साधु या. — b) Ñ1 सा (for स्व-). T3 G2–4 तदा बलात्. — Before 11cd, all MSS. except T1 ins. वैशं° उ° (resp. वैशं°). — c) Ś1 K1 वदंतीं; K2 Ñ2.3 B D ब्रुवाणां. T1 तां; G1.2.5.6 M तु (for ते). — d) Ś1 तत्र; Ñ1 V1 इति; D2 इव; S ते स्व- (for अथ).

12 b) T1 याहि (for पत). — c) K (except K1) Ñ V1 B Da Dn D4.5 इह; D1.2 G2 च; T3 G3–6 अपि; G1 सु- (for हि). T3 G (except G1.2) हि; M3 प्र- (for वि-). — e) G2.3 हि नष्टायां (for विन°). — f) D1.2 transp. न and नः. Ñ1 G (except G3.4) M तु; T1 हि (for नः).

13 b) K4 Ñ V1 B Dn1 D4 T3 G4 क्षेमं; D1.2 योक्तुं; Cd as in text. D1.2 अस्मत्; M3 यत्स्यात् (by transp.). Ś1 K1 B5 स्व- (for यत्). Dn3 D1.2 च; T3 G (except G1) तु (for नः). — c) Ś1 K0.1.4 T G (except G1) परं (for परः). G5.6 कामो.

14 a) K2.3 Ñ2.3 B D (except D1.2.5) T1 त्वं (for वै). K2 Ñ2.3 B Da Dn D4 सर्वविना°; D1.2 कुलविनाशेन. — b) K0.3.4 B1 च; K2 वै; B5 अलं; S (except T3 G3.4) ते (for नः). — d) Ñ1 B3 मे; B5 वै (for नः).

15 Ś1 K1 S om. उवाच. — c) Ñ1 त्वरितं. — d) Ñ1 D1.2 तत्र (for अत्र). T1 न वह्नेरत्र (by transp.). D1 G5.6 च नो (for न वो).

16 a) K (except K1) B D (except Dn) पांशुना; T1 पांसुभिश्छ्. — b) G1 पिधायास्यामि पु°. — c) Ś1 K1 तथा (for एवं).

17 b) K2.3 Ñ1 B1.3 निहर्तुं; Ñ2 Dn D5 विहंतुं; Ñ3 निर्हर्तुं; V1 उद्धर्तुं; B6 निहंतुं; Cd as in text. K (except K1) B (except B6) Da Dn1 D1.2 पांशुसंचयं (K0.3.4 °चयान्); G1 पांसुसंचयात्. — c) Ś1 K1 चोपायो; K2 Ñ3 V1 B1.3 D4 S वो योगो; Ñ2 B5.6 Da Dn वो वादो (for वोपायो). — d) K2.3 Ñ2 B (except B6) D (except D1.2.5) मोक्षार्थं च; K4 विमोक्ष्यामि; Ñ3 विमोक्षार्थं.

18 Ś1 शार्ङ्गाः; K1 B1.6 D (except D1,2.4) शार्ङ्गा ऊ°;

कथमग्निर्न नो दह्यात्कथमाखुर्न भक्षयेत् ।
कथं न स्यात्पिता मोघः कथं माता ध्रियेत नः॥१९
बिल आखोर्विनाशः स्यादग्नेराकाशचारिणाम् ।
अन्ववेक्ष्यैतदुभयं श्रेयान्दाहो न भक्षणम् ॥ २०
गर्हितं मरणं नः स्यादाखुना खादता बिले ।
शिष्टादिष्टः परित्यागः शरीरस्य हुताशनात् ॥ २१

इति श्रीमहाभारते आदिपर्वणि एकविंशत्यधिकद्विशततमोऽध्यायः ॥ २२१ ॥

## २२२

जरितोवाच ।
अस्माद्बिलान्निष्पतितं श्येन आखुं जहार तम् ।
क्षुद्रं गृहीत्वा पादाभ्यां भयं न भविता ततः ॥ १
शार्ङ्गका ऊचुः ।
न हृतं तं वयं विद्मः श्येनेनाखुं कथंचन ।
अन्येऽपि भवितारोऽत्र तेभ्योऽपि भयमेव नः ॥ २
संशयो ह्यग्निरागच्छेद्दृष्टं वायोर्निवर्तनम् ।
मृत्युर्नो बिलवासिभ्यो भवेन्मातरसंशयम् ॥ ३
निःसंशयात्संशयितो मृत्युर्मातर्विशिष्यते ।
चर खे त्वं यथान्यायं पुत्रान्वेत्स्यसि शोभनान् ॥ ४ C. 1. 8383 S. 1. 231. 4 K. 1. 257. 4

---

K3 पक्षिण ऊ°; S (G3 om.) शार्ङ्ग(T3 G2 M6-8 °र्ङ्गि)काः. — [a]) Ñ1 नबर्हान्; T3 G2-4 अभेकान्. B3 मांसपिंडाश्च:. — [b]) T1 एष (for आखुर्). — [c]) T3 G (except G1) पश्य मातर् (for पश्यमाना). T1 बिलं (for भयं). K0.3.4 D5 चेदं (for इदं). — [d]) Ś1 K4 D1 शक्यामो; T1 शक्ष्येम; T3 G (except G1.2) M5 शक्ष्यामि; M6-8 शक्ष्याम. K3 प्रवेशितुं. K2 Ñ2.3 B Dn D2.4.5 प्रवेष्टुं नात्र शक्नुमः; Ñ1 V1 Da न विशामो (Da वेक्ष्याम) बिलं वयं.

19 [a]) K2 Ñ2.3 B6 D घक्षयेत्; T3 G (except G1) हन्यात् (for दह्यात्). — [b]) K2 Ñ2.3 B D (except D1.2.5) नाशयेत् (for भक्ष°). — [d]) K4 चरेत; S Cd चरेत. D1.2 चरेद्वनं (for ध्रियेत नः).

20 [a]) Ñ1 V1 Da बिलम्; S बिलाद्. — [b]) T3 G2-4 M7 °चारिणः. — [d]) Ś1 K1.2 G5 M8 श्रेयो; T1 श्रेष्ठो. G1 M (except M8) आखोर् (for दाहो).

21 V1 om. 21[ab]. — [a]) Ś1 K1 भक्षणं (for मरणं). K0.4 नो; K1.2 Da T G1.3-6 M न; Ñ1 D1.2 G2 हि (for नः). — [b]) K2.3 Ñ B D भक्षिते (Ñ1 D1.2 खादिते); K4 खादिता; T1 खादनाद्; T3 G (except G1) तु तदा; M5 खादनं. — [c]) K1 शिष्टदिष्टः; K2 शिष्टैर्दृष्टः; Ñ3 दृष्टादष्टः; B1.3.5 दृष्टश्चैव; Da शिष्टैर्दिष्टः; D1.2 दिष्ट्या दिष्टः; T1 G2 शिष्टैरिष्टः; T3 G3-6 M3.6-8 शिष्ट इष्टः; G1 विशिष्ट इष्टः (sic). Cd cites शिष्टैः and दिष्टं. — [d]) Ñ1 Dn3 D2 S हुताशने. — After 21, D4 (marg. sec. m.) S ins.:

2147* अग्निदाहे तु नियतं ब्रह्मलोके ध्रुवा गतिः।
[D4 ध्रुमा (for ध्रुवा). T1 अग्नेर्दा° °यता °लोकोद्भवा गतिः. ]

Colophon. *Major parvan:* T3 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 K0.2-4 Ñ3 B Da Dn1.n2 D1.2.4.5 T3 G3.4 M3 खांडवदाह; to it Ś1 B3.5 D1 M3 add शार्ङ्ग(Ś1 M3 °र्ङ्गको)पाख्यान. K1 (om. the sub-parvan name) reads only शार्ङ्गकोपाख्यान. — *Adhy. name.* Ś1 K1 D5 शार्ङ्गकसं(D5 °वि)लापः; K0.3.4 शार्ङ्गिका-विलापः. — *Adhy. no.* (figures, words or both): Dn3 229; D4m 246; D5 30; T1 234; T3 G4-6 M3.6-8 196; G1 M5 195; G2 194; G3 199. — *S'loka no.:* Dn 22; M3 24. — *Aggregate s'loka no.:* Dn2 8355.

## 222

1 Ś1 S om. उवाच (G5 om. the ref.). — [a]) Ś1 K0.1 D5 T1 निपतितं; B1 M6-8 निष्पतंतं. — [b]) K2.3 Ñ2.3 B D (except D1.2) M5 आखुं श्येनो (by transp.). — [cd]) K2.3 Ñ2.3 B D (except D1.2) क्षुद्रं पद्भ्यां गृहीत्वा च (B5 तु) यातो नात्र भयं हि वः.

2 K1 B3.6 Da Dn D4 शार्ङ्गाः; K2 T1 G2-4 शार्ङ्गिका. Ś1 K1 S om. ऊचुः. — [a]) B (except B6) तु (for तं). K2 B6 T1 G1 M विद्म. T3 G2-4 एकमेव हृतं विद्म; G5.6 नापाहृतं वयं विद्म. — [d]) Ś1 तेभ्यस्तु. K2.3 भयमस्ति (K3 °मेति) नः. D1.2 तेभ्योपि हि च नो भयं.

3 [a]) N3 B5 M संशयं. K2 Ñ2.3 B1.3.5 Dn D4.5 वह्निराग°. B6 Da संशयोग्निरिहाग°. — [c]) Ś1 K1 इत्युक्त्वा भयमाखुभ्यो. — [d]) K0.3.4 T3 G2-4 °संशयः. K2 Ñ2.3 V1 B (except B6) D (except D1.2) बिले स्यान्नात्र संशयः.

4 [c]) Ś1 जननि त्वं; K0 Ñ1 चर त्वं वै; K1 जनय त्वं; K2 D2.4 खेचरि त्वं; K3 Ñ3 B (except B6) D1.5 खे चर त्वं (by transp.); K4 चरस्वेवं; T1 चरस्वैव; T3 G (except

C. 1. 8390
B. 1. 231. 5
K. 1. 257. 5

जरितोवाच ।
अहं वै श्येनमायान्तमद्राक्षं बिलमन्तिकात् ।
संचरन्तं समादाय जहाराखुं बिलाद्बली ॥ ५
तं पतन्तमहं श्येनं त्वरिता पृष्ठतोऽन्वगाम् ।
आशिषोऽस्य प्रयुञ्जाना हरतो मूषकं बिलात् ॥ ६
यो नो द्वेष्टारमादाय श्येनराज प्रधावसि ।
भव त्वं दिवमास्थाय निरमित्रो हिरण्मयः ॥ ७
यदा स भक्षितस्तेन क्षुधितेन पतत्रिणा ।
तदाहं तमनुज्ञाप्य प्रत्युपायां गृहान्प्रति ॥ ८
प्रविशध्वं बिलं पुत्रा विश्रब्धा नास्ति वो भयम् ।
श्येनेन मम पश्यन्त्या हृत आखुर्न संशयः ॥ ९

शार्ङ्गका ऊचुः ।
न विद्म वै वयं मातर्हृतमाखुमितः पुरा ।
अविज्ञाय न शक्ष्यामो बिलमाविशतुं वयम् ॥ १०
जरितोवाच ।
अहं हि तं प्रजानामि हृतं श्येनेन मूषकम् ।
अत एव भयं नास्ति क्रियतां वचनं मम ॥ ११
शार्ङ्गका ऊचुः ।
न त्वं मिथ्योपचारेण मोक्षयेथा भयं महत् ।
समाकुलेषु ज्ञानेषु न बुद्धिकृतमेव तत् ॥ १२
न चोपकृतमस्माभिर्न चास्मान्वेत्थ ये वयम् ।
पीड्यमाना भरस्यस्मान्का सती के वयं तव ॥ १३

---

G1) M6-8 चर वै त्वं. Cd cites चर (=गच्छ) as in text. Ś1 K (except K2) Ñ1 D1.2.5 यथाकामं. — d) K2.3 Ṅ V1 B D G4.5 आ(D4 G4.5 प्रा)प्स्यसि; T1 उत्सृज्य; Cd वेत्स्यसि (as in text). Ś1 K1 शोभने.

5 K1 S om. उवाच. — a) K2 Ñ2.3 B (except B6) Dn D4 अहं वेगेन तं यांतं. — b) D1.2 महांतं (for अद्राक्षं). K2 Ñ2.3 B (except B6) Dn D4 पततां वरं (for बिलम°). — c) K2.3 Ñ2.3 B (except B6) Dn D4 बिलादाखुं. Ś1 K0.1.4 Ñ1 V1 D1.2.5 तमादाय. — d) T1 M5 बलादाखुं. Ś1 K1 Ñ1 V1 T1 G1-3.4 (by corr.) बलाद्बली. K2.3 Ñ2.3 B1.3.5 Dn D4 श्येनं पुत्रा महाबलं.

6 a) K2 N2.3 B (except B6) Dn D4.5 तं पतंतं महावेगात्. — b) Ñ1 Dn2 D1 पृष्ठतोन्वयां; T3 G2-4 पूर्वमन्वगां; G1.5.6 M6-8 पृष्ठमन्वगां. — After $6^{ab}$, K4 reads 9, repeating it in its proper place. — d) S हरंतं. K1.3 Ṅ V1 B Da Dn2 D4.5 S मूषिकं. Ś1 D1.2 G1-3 बलात्. — K2 ins. after 6: D4 (marg. *sec. m.*), after $7^{ab}$:

2148* नमोऽस्तु ते श्येनराज रक्षिता राजवत्त्वया ।

7 a) Ś1 K0.1.4 Ñ1 D1.4.5 °माक्रम्य. — b) K3 श्येनीपुत्र. Ś1 K0.1.4 Ñ1 हरस्युत; S विधावसि. — After $7^{ab}$, D4 (marg. *sec. m.*) ins. 2148*. — c) K0.3.4 M6-8 चिरमास्थाय; V1 दिवमासाद्य. — d) D2 श्येनराजो हिर°.

8 a) Ś1 K1 यदा परोक्षितस्; K2.3 N2.3 V1 B (except B6) Dn D4.5 स यदा भ°; D1.2 यदासौ भ°. — b) K2.3 Ñ2.3 B (except B6) Dn D4.5 श्येनेनाखुः भत°; M6-8 क्षुधितेन च पत्रिणा. — c) Ś1 D1.2 S (except G1) अनुज्ञाय; B3 °प्राप्य. — d) Ṅ1 D1.2 प्रस्थिता स्वान्. K1 प्रहं प्रति; K2.3 Ñ2.3 B (except B6) Dn D4.5 पुनर्गृहं (K3 D5 °गृहान्; Dn1.n3 °गृहे); D2 गृहानपि.

9 b) K1 T1 G2 विस्रब्धा; Ñ3 B (except B6) D4 विस्र(Ñ3 °श्र)ब्धं; T3 G1.3-6 M विस्रंभान् (M6-8 °भा). K2 Ñ3 B1.5 D4 नात्र; B6 मात्र. — d) Dn3 D1 हृतश्चाखुर्. K2 Ñ2.3 B (except B6) Dn1.n2 D4 महात्मना (for न सं°).

10 K2 T1 G2 शार्ङ्गिकाः; B1.3 Dn D4 T3 G4-6 M6-8 शार्ङ्गाः. Ś1 K1 S om. ऊचुः. D2 शार्ङ्ग उवाच. — T1 G3 M5 (hapl.) om. 10-11 and the ref. before 12. — a) K0.4 V1 B1.5.6 D1 G1.2.4 विद्मो वै; K2.3 Ñ2.3 B3 Da Dn D3.4.5 T3 M (M5 om.) विद्महे; G5.6 विद्म ते. K2.3 Ñ2.3 B (except B6) D (except D1) हृतं (for वयं). — b) Ś1 Ñ1 V1 D1.2 हृत आखुर्. G4 ततः पुरा. K2.3 Ñ2.3 B (except B6) D (except D1.2) श्येनेनाखुं कथंचन (=$2^{b}$). — d) K2.3 Ṅ V1 B3 Dn D1.4 प्रवेष्टुं विवरं भुवः (K2 °वि); B1.5 प्रवेष्टुं च बिलं भुवः; B6 Da प्रवेष्टुं बिलमद्य वै.

11 T1 G3 M5 om. 11 (with ref.; cf. v. l. 10). Ś1 K1 S om. उवाच. — a) K0 D2 हृतं प्रजा°; K2.3 Ñ2.3 B (except B6) Dn D4.5 तमभिजा°; D1 तात प्रजा°; S (T1 G3 M5 om.) हि तं (G4 हृतं) विजा°. — b) Many MSS. (mostly S) मूषिकं. — c) K2 Ñ2.3 V1 B (except B6) Dn D4 नास्ति वोत्र भयं पुत्राः; K3 corrupt.

12 T1 G3 M5 om. the ref. (cf. v. l. 10). K2.4 D5 G2 शार्ङ्गिकाः; B1.3 Dn D2 शार्ङ्गाः. Ś1 K1 S om. ऊचुः. — b) K2.3 Ñ2.3 B D (except D1.2) भयाद्धि नः; G5.6

तरुणी दर्शनीयासि समर्था भर्तुरेषणे ।
अनुगच्छ स्वभर्तारं पुत्रानाप्स्यसि शोभनान् ॥ १४
वयमप्यग्निमाविश्य लोकान्प्राप्स्यामहे शुभान् ।
अथास्मान्न दहेदग्निरायास्त्वं पुनरेव नः ॥ १५

वैशंपायन उवाच ।

एवमुक्त्वा ततः शार्ङ्गी पुत्रानुत्सृज्य खाण्डवे ।
जगाम त्वरिता देशं क्षेममग्नेरनाश्रयम् ॥ १६
ततस्तीक्ष्णार्चिरभ्यागाज्ज्वलितो हव्यवाहनः ।
यत्र शार्ङ्गा बभूवुस्ते मन्दपालस्य पुत्रकाः ॥ १७
ते शार्ङ्गा ज्वलनं दृष्ट्वा ज्वलितं स्वेन तेजसा ।
जरितारिस्ततो वाचं श्रावयामास पावकम् ॥ १८ C. 1. 8403 B. 1. 231. 18 K. 1. 257. 18

इति श्रीमहाभारते आदिपर्वणि द्वाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२२ ॥

---

भयं मम.

13 [cd]) Ko Dn1 D2.5 G5.6 पीड्यमानान्. K2 Ñ V1 B Da Dn D1.4 बिभर्ष्यस्मान्; T1 G2 M6–8 हरस्यस्मान्. Ś1 K1 °ना भवस्य(Ś1 °त्य)स्मत्कृते के ते (Ś1 ते के) वयं तव.

14 [b]) K4 S भर्तृपो(G3.4 °तो)षणे; Dn3 D2 भर्तुरीदृशी. Cd cites एषणे (as in text). — [c]) K2 Ñ2.3 B Da Dn D4 °गच्छ पतिं मातः; K3 °गच्छत्पतिर्मातः; D1.2 °गच्छसि भर्तारं. — [d]) Ś1 Ko.1.4 वेत्स्यसि; Dn3 D1.2 T1 प्राप्स्यसि; G2.5.6 M लप्स्यसि. T1 G1.5.6 M शोभने.

15 Ś1 (? hapl.) om. 15[ab]. — [a]) K2.3 Ñ2.3 B D (except D1.2) वयमग्निं समाविश्य. — [b]) Ko.4 Ñ1 V1 Dn3 D1.2 T1 प्राप्स्याम शोभनान्; K1.3 Ñ2 B6 Dn1.n2 D4.5 G1 आप्स्याम शोभनान्; Da आप्स्यामहे शु°. — [c]) D5 यदास्मान्; T1 अस्मांस्तु. K2 दहत्यग्निर्. — [d]) Ko.3.4 S अंबायाः; K2 त्वमायाः (for आयास्त्वं). — After 15, D4 marg. sec. m. ins.:

2149* समागमश्च भविता त्वं वै शोकं च मा कृथाः ।

16 Ś1 K1.3 D2 S om. उवाच (G6 om. the ref.). — [a]) K (except K1) Ñ V1 D (except D4.5) T1 G2 M उक्त्वा. Ś1 K1 तदा; G5.6 तथा. K2.4 Da1 D1 शार्ङ्गा. — [b]) Ś1 Ko.1.4 D2 सुतानुत्सृज्य; Ñ1 तानुत्सृज्य च. — [d]) Ś1 K (except K2) V1 निराश्रयं; Ñ1 D1.2 निरामयं; Ñ2.3 B3 m Dn D4.5 अनामयं.

17 [a]) B3 तीक्ष्णाग्निर्; D1.2 कृशानुर्; G1 तीक्ष्णांशुर्. K3 अभ्यायात्. — [b]) K2 Ñ2.3 V1 B D (except D1.2) G1 त्वरितो हव्य°.

18 Dn2 om. 18. — [a]) K2 N B (except B6) Dn1.n3 ततस्ते; T1 G1.6 M तं शार्ङ्गाः; T3 G2–5 शार्ङ्गकाः. K2 Ñ B (except B6) Dn1.n3 D4 ज्वलितं. — [b]) K2 Ñ B1.5 Dn1.n3 D1.4 G1.5.6 ज्वलनं; B3.6 Da D2 T1 M ज्वलंतं. K2 Ñ B (except B6) Dn1.n3 D4 ते विहंगमाः (for स्वेन ते°). — After 18[ab], S ins.:

2150* व्यथिताः करुणा वाचः श्रावयामासुरन्तिकात् ।
— [c]) Ś1 K (except K3) Ñ V1 B6 D (except D4; Dn2 om.) ततो वाक्यं; G5.6 M ततो वाचः.

Colophon om. in T1. — *Major parvan:* T3 G M संभव° (for आदि°). — *Sub-parvan:* Ś1 Ko.2.4 B1 D1.2.5 G3.4 खांडवदाह; to it Ś1 Ko.4 B1 D1.2.5 add शार्ङ्गको(B1 D1 शार्ङ्गो)पाख्यान. K1.3 N3 B3.5.6 Da Dn1.n2 D4 M3 (all om. the sub-parvan name) mention only शार्ङ्गको(Ñ3 B3.5 Dn1.n2 D4 शार्ङ्गो)पाख्यान. — *Adhy. name:* Ś1 K1 जरिता(K1 शार्ङ्गी)पलायनं. — *Adhy. no.* (figures, words or both): Dn3 230; D4m 247; D5 31; T3 G4–6 M3.6–8 197; G1 M5 196; G2 195; G3 200. — *S'loka no.:* Dn1.n3 18; M3 19.

## 223

1 Before 1, K4 ins.:

2151* कथं नाम पितास्माकं दुःखापन्ना वशंविते (sic) ।
— Ś1 K1 S om. उवाच; B5 om. the ref. — [a]) V1 पुरस्तात्कृच्छ्र°. — [b]) M3 (*sup. lin.* as in text).5 श्रीमाञ्. — [c]) T G (except G1) संप्रेक्ष्य. K2 कृच्छ्रकालं च सं°. — [d]) Ko.4 B3 Da2 Dn1.n3 D1.5 T1 G1.2 M5 नैवेति; K1 नावैति; K2 corrupt. D2 व्यथते नैव क°; M6–8 व्यसनं वेत्ति क°.

2 [a]) T3 G (except G1.2) यत्तु. K (except K1) Ñ V1 B D अनुप्राप्तं. T1 यः कृच्छ्रमभिसंप्राप्तं. — [b]) D5 विवेकी. S विश्वासान्नावबुध्यति (T1 °ते). — [c]) Ś1 K (except K4) B3 D5 °कालव्यथितो. — [d]) K2.3 Ñ2.3 B (except B6) Dn D4 न श्रेयो विंदते महत्.

3 Ś1 K1 D2 S om. उवाच. — [ab]) Ko D5 G3.4 वीरस्त्वमसि. Ś1 वद; K4 D1.2 वचः; G2 तु नः (for च नः). K3 एवमुक्तो भ्रातृभिस्तु जरितारिर्विभावसुं. — [c]) K2.3

# २२३

C. 1. 8404
B. 1. 232. 1
K. 1. 258. 1

जरितारिरुवाच ।

पुरतः कृच्छ्रकालस्य धीमाञ्जागर्ति पूरुषः ।
स कृच्छ्रकालं संप्राप्य व्यथां नैवैति कर्हिचित् ॥ १
यस्तु कृच्छ्रमसंप्राप्तं विचेता नावबुध्यते ।
स कृच्छ्रकाले व्यथितो न प्रजानाति किंचन ॥ २

सारिसृक्क उवाच ।

धीरस्त्वमसि मेधावी प्राणकृच्छ्रमिदं च नः ।
शूरः प्राज्ञो बहूनां हि भवत्येको न संशयः ॥ ३

स्तम्बमित्र उवाच ।

ज्येष्ठस्त्राता भवति वै ज्येष्ठो मुञ्चति कृच्छ्रतः ।
ज्येष्ठश्चेन्न प्रजानाति कनीयान्किं करिष्यति ॥ ४

द्रोण उवाच ।

हिरण्यरेतास्त्वरितो ज्वलन्नायाति नः क्षयम् ।
सप्तजिह्वोऽनलः क्षामो लेलिहानोपसर्पति ॥ ५

वैशंपायन उवाच ।

एवमुक्तो भ्रातृभिस्तु जरितारिर्विभावसुम् ।
तुष्टाव प्राञ्जलिर्भूत्वा यथा तच्छृणु पार्थिव ॥ ६

जरितारिरुवाच ।

आत्मासि वायोः पवनः शरीरमुत वीरुधाम् ।
योनिरापश्च ते शुक्र योनिस्त्वमसि चाम्भसः ॥ ७
ऊर्ध्वं चाधश्च गच्छन्ति विसर्पन्ति च पार्श्वतः ।
अर्चिषस्ते महावीर्य रश्मयः सवितुर्यथा ॥ ८

सारिसृक्क उवाच ।

माता प्रपन्ना पितरं न विद्मः
पक्षाश्च नो न प्रजाताब्जकेतो ।
न नस्त्राता विद्यतेऽग्ने त्वदन्य-
स्तस्माद्धि नः परिरक्षैकवीर ॥ ९
यदग्ने ते शिवं रूपं ये च ते सप्त हेतयः ।

Ñ2.3 B D (except D1.2) प्राज्ञः शूरो (by transp.); S नमस्तेस्तु. Ñ3 V1 च (for हि). — d) K0.3.4 D5 नरोत्तमः; K2 कुले गुणी; S (except G5.6) गुणाधिकः.

4 Ś1 K1 D2 S om. उवाच. — a) K2.3 B6 D1.2 G1.3.4 भ्राता; Ñ2.3 Dn D4 तातो (for त्राता). T1 अत्र भ्रातृष्वनेकेषु. — c) Ś1 K हि जानाति; Ñ3 विजानाति.

5 Ś1 K1 D2 S (except M7) om. उवाच. — a) G6 °रेतास्त्वरति. — b) T3 G2–4 च (for नः). Da1 T3 G2–4 स्वयं (for क्षयम्). — c) N (except Da) °जिह्वाननः (D1 °तः); T1 G5.6 °जिह्वानलः. K2 Ñ2.3 B (except B6) Dn D4.5 क्रूरो; Ñ1 V1 D1.2 कालो; G1 सर्वान्; M5 क्षेमो; M6–8 क्षिप्रं (for क्षामो). M8 °जिह्वोनिलसखो. — d) K0 प्रसर्पति; K2–4 Ñ2 B3 Dn D4.5 T G5.6 M5–8 विसर्पति; K4m N3 B1.5.6 Da विसर्पिता; V1 अवसर्पति; G1–4 अपि सर्पति; M8 वनस्पतीन्.

6 Ś1 K1.3 D2 S om. उवाच (T1 om. the ref.). — ab) Ñ1 स एवमुक्तो भ्रातृभिर् (for a). K2.3 Ñ2.3 B (except B6) Dn D4.5 एवं संभाष्य ते(K3 B5 चा)न्योन्यं मंदपालस्य पुत्रकाः. — c) K0.4 D1 प्रणतो भूत्वा. K2.3 Ñ2.3 B (except B6) Dn D4.5 तुष्टुवुः प्रय(K3 °ण)ता भूत्वा. — d) K2 Ñ2.3 B1.3.5 Dn D4.5 यथाग्निं; Ñ1 V1 B6 Da D1.2 यथावच्. Ś1 K1 Ñ1 D1.2 शृणु भारत; K2 शृणु तन्नृप. G1 M3.5 यत्तच्छृणु नराधिप.

7 Ś1 K1 D2 S om. उवाच. — a) Ś1 K1 M3 (*sup. lin.*) वायुः पवनः; K4 Ñ V1 B D वायोर्ज्वलन. — b) K2 B5 Da अपि; Ñ2 B3.6 Dn D1.2.4 T1 असि; D5 पुण्य- (for उत). Ś1 K1 Cd वीरुधः. T3 G2–4 शरीरांतरचार्यसि. — c) Ś1 K1.2.4 Ñ V1 Dn D2.4.5 शुक्रं; M3 *sup. lin.* शुक्र. G3.4 योनिरार्षोग्निहोत्रस्य. — d) G2 M3.6.7 चांभसां; G3.4 वर्चसः.

8 a) K2 ऊर्ध्वबाहुश्च. K2 Ñ2.3 B D (except D1.2.5) सर्पंति. — b) Ś1 विस्फुरंति; D5 विसर्पते. G1 इव (for च). S शाश्वताः (G3.4 M5.7 °तः). K2 N2.3 V1 B Da Dn D4 पृष्ठतः पार्श्वतस्तथा; Ñ1 दिवि सर्पंति पा°. — c) Ś1 अर्चींषि ते.

9 Ś1 K1 S om. उवाच. — a) N B D (except D5) प्रणष्टा; V1 विपन्ना; T1 G1 M प्रयाता; M3 (*sup. lin.*) Cd as in text. T3 G2–4 पितरं विपक्षा. — b) K4 जाता; G5.6 M सुजाता (for प्रजाता). K3.4 धूमकेतो; M3.5 भवादे. K2 Ñ V1 B D (except D5) पक्षा जाता नैव नो(Ñ1 च)धूम-

तेन नः परिरक्षाय ईडितः शरणैषिणः ॥ १०

त्वमेवैकस्तपसे जातवेदो
नान्यस्तप्ता विद्यते गोषु देव ।
ऋषीनस्मान्बालकान्पालयस्व
परेणास्मान्प्रैहि वै हव्यवाह ॥ ११

स्तम्बमित्र उवाच ।

सर्वमग्ने त्वमेवैकस्त्वयि सर्वमिदं जगत् ।
त्वं धारयसि भूतानि भुवनं त्वं बिभर्षि च ॥ १२
त्वमग्निर्हव्यवाहस्त्वं त्वमेव परमं हविः ।
मनीषिणस्त्वां यजन्ते बहुधा चैकधैव च ॥ १३

सृष्ट्वा लोकांस्त्रीनिमान्हव्यवाह
प्राप्ते काले पचसि पुनः समिद्धः ।
सर्वस्यास्य भुवनस्य प्रसूति-
स्त्वमेवाग्ने भवसि पुनः प्रतिष्ठा ॥ १४

त्वमन्नं प्राणिनां भुक्तमन्तर्भूतो जगत्पते ।
नित्यं प्रवृद्धः पचसि त्वयि सर्वं प्रतिष्ठितम् ॥ १५

द्रोण उवाच ।

सूर्यो भूत्वा रश्मिभिर्जातवेदो
भूमेरम्भो भूमिजातान्रसांश्च ।
विश्वानादाय पुनरुत्सर्गकाले
सृष्ट्वा वृष्ट्या भावयसीह शुक्र ॥ १६

त्वत्त एताः पुनः शुक्र वीरुधो हरितच्छदाः । C. 1. 8420 B. 1. 222. 17 K. 1. 258. 17

---

केतो; T1 पक्षाः सुजाता न हि धूम°; T3 G2–4 वयं कृशा भगवन्नः प्रसीद. — c) K0 नानाख्याता; K3.4 ना(K4 नो)न्यस्त्राता; G1 स नस्त्राता; M5 जनस्त्राता. K2 Ñ2.3 B D (except D1.2.5) विद्यते वै; T1 G1.2 M (except M3) विद्यतेऽग्नेस्. — d) K2 Ñ B D S तस्मा(G1 भया)दस्मान्; V1 तस्मादेतत्. K2 Ñ2.3 B D (except D1.2) त्राहि बालांस्त्वमग्ने; T G परिपाह्येकवीर; M6–8 परिहृत्यैव गच्छ.

10 a) G2 यच्च तेऽग्ने. G1 विश्वरूपं. — b) Ś1 K1 याश्च ते; K0 येत्र ते; K2 यच्च ते; K3 यत्र ते; G1 यच्चैते. — c) K0.3 परिविध्यद्य; K2 Da °विद्धि त्वं; K4 °विध्यस्मान्; Ñ1 °पाह्यद्य; Ñ2.3 V1 B3.6 Dn D1.4 °पाहि त्वं; B1.5 °वीक्षस्व; D5 °रक्षस्व; S °रक्षेथाः (M6–8 °रक्षंतु). — d) K2 Ñ2.3 V1 B3.6 Da Dn D1 आर्तान्नः; K4 पंडितान्; Ñ1 रक्षितान्; D4 आर्ताः स्म; D5 आर्तास्ते; S पीडितान्; Cd as in text. Ś1 K1 शरणैषिभिः; K2 शरणागतान्.

11 a) K0 Cd तमसे; K2 G2 तपसो; K3 तप्यसे; D2 M3 (*sup. lin.*) तपसा. M6–8 जातभावो. — b) Ś1 K1 D1.2 तदा; K2 त्वत्तो; Ñ1 त्राता; B5 गोप्ता (for तप्ता). Ś1 K1.4 Da1 G1 देवः. — c) K4 ऋषींस्त्वस्मान्. K2 पालय त्वं. — d) Cf. 19c. B D5 G2 प्रेहि. T1 G1 चेद्; G2–4 M च; G5.6 हे (for वै). — Ś1 K (except K2) Ñ1 D1.2 भवत्(D1.2 तव)प्रसादाज्जीवितं प्राप्नुयाम.

12 Ś1 K1 S om. उवाच. B6 om. the ref. — a) S (except T1 G2 M5) त्वमेकस्तु. — d) T3 G (except G1) भुवनं च बिभर्ति च.

13 Before 13, S ins. द्रोणः (M7 वैशं°). — a) D1.2 S त्वमग्ने. D1.2 हव्यकव्यश्च; S हव्यवाहश्च (G1 M3.5 °भुवचैव). — b) T3 G (except G1) परमा गतिः. — cd) B5 तां; D2 G3.5 त्वं (for त्वां). K4 Ñ2.3 B (except B3) Dn D4 जानंति. K3 चैकमेव च; Ñ2.3 V1 B1.5.6 Da Dn D4 चैकधापि च; G1 चैकयापि च; G5 चैकदापि च. K2 एकधा बहुधा चैव यजंति त्वां मनीषिणः.

14 b) K2 Ñ2.3 V1 B (except B6) D (except D1.2.5) काले प्राप्ते (by transp.). Ñ1 D1.2 दहसि (for पचसि). T1 M6–8 समिद्धं; G1 त्वमिद्धः; G2 समिद्धमेतत्. — c) K2.4 Ñ2.3 B1.5 Dn D4 त्वं सर्वस्य; B3 त्वं सर्वस्रष्टा; B6 D1.2 त्वं सर्वस्यास्य (for सर्वस्यास्य). — d) K1 त्वमेवाग्निर्; Ñ1 D1.2 °वास्य. K2 प्रभवसि; Da पचसि. Ś1 त्वमन्नं; Cd प्रतिष्ठा (as in text).

15 Before 15, K2 B1.3.5 D (except D1.2.5) ins. द्रोण उवाच. — a) K2 Ñ2.3 B D प्राणिभिर् (D1.2 प्राणिना). K4 M6–8 भुंक्ते; T G M3.5 भुंक्षे. — b) Ś1 K1 अंतर्भूतं. — c) Ś1 K1 Ñ V1 B5 Dn2 T1 G5 नित्य- (for नित्यं). B5 प्रवृद्धं; D2 समृद्धः. K0.3.4 D5 चरसि.

16 K1 om. उवाच. K2 Ñ2.3 B D (except D2) S om. the ref. (cf. v. l. 13, 15). — b) Ś1 K1 भूमिरंभो; S भूमेरापो. Ś1 K1 V1 B (except B5) Da भूमिजानां. Ś1 K1 रसानां. D1.2 भूमिजातं रसं च. — c) K2 विश्वस्यादाय; S विश्वं चा(G1 °श्वाश्वा-; G3.4 °श्वं त्वा)दाय. Cd cites विश्वान् (as in text). K2 Ñ2.3 B1 D (except D5) उत्सृज्य काले; T3 G3–6 उत्सृ(G3.4 अप उत्सृ)जसि काले. — d) Ś1 K1 सृष्टिं; K2 Dn1.n3 D1 वृष्ट्या; K3 B1 Cd सृष्ट्या; K4 स्मृतो; Ñ2.3 Dn3 दृष्ट्वा; D2.4 दृष्ट्या; G2 दृष्ट्वा (for सृष्ट्वा). K2 T1 G1 M3 सृष्ट्या (T1 °ष्ट्वा); B6 भूयो; T3 G2–5 दृष्ट्वा; G6 दृष्ट्या (for वृष्ट्या). G3.6 इव (for इह). K0 शुक्रे; K2.4 Da1 T1 G3 M5.6 °क्रः; Dn1 D2.5 °क्रं.

C. 1. 8420 B. 1. 232. 17 K. 1. 238. 17 जायन्ते पुष्करिण्यश्च समुद्रश्च महोदधिः ॥ १७
इदं वै सद्म तिग्मांशो वरुणस्य परायणम् ।
शिवस्त्राता भवास्माकं मास्मानद्य विनाशय ॥ १८
पिङ्गाक्ष लोहितग्रीव कृष्णवर्त्मन्हुताशन ।
परेण प्रैहि मुञ्चास्मान्सागरस्य गृहानिव ॥ १९

वैशंपायन उवाच ।

एवमुक्तो जातवेदा द्रोणेनाक्लिष्टकर्मणा ।
द्रोणमाह प्रतीतात्मा मन्दपालप्रतिज्ञया ॥ २०
ऋषिर्द्रोणस्त्वमसि वै ब्रह्मैतद्व्याहृतं त्वया ।
ईप्सितं ते करिष्यामि न च ते विद्यते भयम् ॥ २१
मन्दपालेन यूयं हि मम पूर्वं निवेदिताः ।
वर्जयेः पुत्रकान्मह्यं दहन्दावमिति स्म ह ॥ २२
यच्च तद्वचनं तस्य त्वया यच्चेह भाषितम् ।
उभयं मे गरीयस्तद्ब्रूहि किं करवाणि ते ।
भृशं प्रीतोऽस्मि भद्रं ते ब्रह्मन्स्तोत्रेण ते विभो ॥ २३

द्रोण उवाच ।

इमे मार्जारकाः शुक्र नित्यमुद्वेजयन्ति नः ।
एतान्कुरुष्व दंष्ट्रासु हव्यवाह् सबान्धवान् ॥ २४

वैशंपायन उवाच ।

तथा तत्कृतवान्वह्निरभ्यनुज्ञाय शार्ङ्गकान् ।
ददाह खाण्डवं चैव समिद्धो जनमेजय ॥ २५

इति श्रीमहाभारते आदिपर्वणि त्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥ २२३ ॥

---

17 a) Ś1 K (except K2) G3.4 त्वत्त एव; Ñ1 धन्यास्त्वत्तः; G1 त्वत्तो ह्येताः. — d) Ñ2 B Dn D4.5 सुभद्रश्च; Cd Nīlp as in text. G2 समृद्धाश्च महौषधीः.

18 a) Ñ1 इदं च; T3 G2–4 इमं वै; G5.6 शोभनं. V1 संप्रति; T1 स्तुति; T3 G2–4 सर्व- (for सद्म). K2.4 D4 G1.3.4 तिग्मांशोर्. — c) Ñ1 जीवप्रदो (for शिव°). Dn3 D2 सदा (for भव). — d) Ñ1 न (for मा).

19 a) T3 G3–6 पिंगलाक्ष (G3 °ग्र) हयग्रीव; M6–8 पिंगलाक्ष सितश्मश्रो. — b) K0 D1.2 T G कृष्णवर्त्मे. — c) Cf. 11d. K2 Ñ V1 B Da T1 G2 प्रेहि; Cd प्रैहि (as in text). M5 वरेण रे प्रहिण्वास्मान्. — d) Ś1 K1 गृहान्प्रति; D1.2 गृहाणि च.

20 Ś1 K1.3 Da2 D2 T3 G2–4 M5–8 om. उवाच. B6 T1 G1.5.6 M3 om. the ref. — a) K2.3 D2.5 T1 G3 जातवेदो. — b) K2 Ñ2.3 B D (except D1.2.5) द्रोणेन ब्रह्मवादिना. — c) K3 च प्रीतात्मा; D1.2 प्रतीतोस्मि; D4 प्रणीतात्मा. G1 M3.5 तं द्रोणमाह प्रीतात्मा.

21 Before 21, all MSS. ins. अग्निरुवाच (Ś1 K1 S om. उवाच). — a) K4 T3 G2–4 ऋषे. T1 G2 द्रोण महाप्राज्ञ.

22 a) K2 Ñ2.3 B Da Dn D4 वै यूयं; D1 पूर्वं हि. — b) K3.4 Dn1 T1 G2.6 वर्जयेत्. — d) M6.8 इह (for इति).

23 a) D1.2 यदुक्तं (for यच्च तद्). K2 Ñ2.3 B Da Dn D4 तस्य तद्वचनं (K2 °नाद्) द्रोण. — c) K2 Ñ V1 B (except B1) D गरीयस्तु; K4 °यश्च; S °यस्त्वाद्. — d) Ś1 ते; K1 तत् (for किं). Ś1 किं; K2 च (for ते). — f) K0 B D1.2.5 T3 G6 ब्रह्मस्तो°; M5 स्तोत्रेणानेन. Cd cites ब्रह्मन् (as in text). K2 Ñ2.3 B D (except D2) सत्तम (for ते विभो).

24 K1 S om. उवाच. — After द्रोणः, T3 G2–4 ins.:

2152* त्वद्भक्तान्सर्वदेवेश जातवेदो महायशाः ।

— b) Ñ1 D1.2 भृशम् (for नित्यम्). — c) K2 दंष्ट्रान्वै; Ñ2 Dn D1.2.4.5 दग्धांस्त्वं; N3 V1 B1.6 Da दंष्ट्राग्रे; B3.5 दंष्ट्रायां; G1 धक्ष्वाशु. — d) K2 Ñ2.3 B D हुताशन; S (except M6–8) हव्यवाट् त्वं.

25 Ś1 K1.3 D2 T G2–4 om. उवाच; K2 Ñ2.3 B Da Dn1.n2 G5.6 M om. the ref. — a) K2 G4 स; Ñ1 च (for तत्). K3 Ñ2.3 B D (except D5) T3 G3.5 M5 अग्निः (for वह्निः). — b) K4 Da G2 शार्ङ्गिकान्. — c) K2 दाहं; Ñ2.3 V1 B D (except D1.2.5) दावं; S चापि (for चैव). — d) T3 G (except G1) संप्रेक्ष्य (for समिद्धो).

Colophon. *Major parvan:* T3 G M संभव° (for आदि°). — *Sub-parvan.* Ś1 K0–2 B1.3 Dn1.n2 D1.2.4.5 G3.4 M3.5 खांडवदाह; to it Ś1 K0–2 B1.3 Dn1.n2 D1.2.4.5 M3 add शार्ङ्गको(K2 शार्ङ्गिको; B1.3 Dn1 D4 शार्ङ्गों)पाख्यान. K3.4 Ñ3 B5.6 Da (all om. the sub-parvan name) mention only शार्ङ्गको(Ñ3 B5 शार्ङ्गों)पाख्यान. — *Adhy. name:* K4 अग्निस्तवः; T1 शार्ङ्गिकास्तवः. — *Adhy. no.* (figures, words or both): Dn3 231; D4m 248; D5 31; T1 235; T3 G4–6 M3.6–8 198; G1 M5 197; G2 196; G3 201. — *S'loka no.:* Dn 25; M3 26. — *Aggregate s'loka no.:* Dn2 8397.

# २२४

वैशंपायन उवाच ।
मन्दपालोऽपि कौरव्य चिन्तयानः सुतांस्तदा ।
उक्तवानप्यशीतांशुं नैव स स्म न तप्यते ॥ १
स तप्यमानः पुत्रार्थे लपितामिदमब्रवीत् ।
कथं न्वशक्ताः प्लवने लपिते मम पुत्रकाः ॥ २
वर्धमाने हुतवहे वाते शीघ्रं प्रवायति ।
असमर्था विमोक्षाय भविष्यन्ति ममात्मजाः ॥ ३
कथं न्वशक्ता त्राणाय माता तेषां तपस्विनी ।
भविष्यत्यसुखाविष्टा पुत्रत्राणमपश्यती ॥ ४
कथं नु सरणेऽशक्तान्पतने च ममात्मजान् ।
संतप्यमाना *अभितो वाशमानाभिधावती ॥ ५
जरितारिः कथं पुत्रः सारिसृक्कः कथं च मे ।
स्तम्बमित्रः कथं द्रोणः कथं सा च तपस्विनी ॥ ६
लालप्यमानं तमृषिं मन्दपालं तथा वने ।
लपिता प्रत्युवाचेदं सासूयमिव भारत ॥ ७
न ते सुतेष्ववेक्षास्ति तानृषीनुक्तवानसि ।
तेजस्विनो वीर्यवन्तो न तेषां ज्वलनाद्भयम् ॥ ८
तथाग्नौ ते *परीताश्च त्वया हि मम संनिधौ ।
प्रतिश्रुतं तथा चेति ज्वलनेन महात्मना ॥ ९
लोकपालोऽनृतां वाचं न तु वक्ता कथंचन ।　C. 1. 8428 B. 1. 233. 10 K. 1. 259. 10

## 224

1 Ś1 K1.3 D2 S om. उवाच. — $^{a}$) V1 D1.2 °पालस्तु. B5 राजेंद्र; G2 कौरव्यः. — $^{b}$) K2 °यानः स वै सुतान्; Ñ1 D1.2 चिंतयन्स्वसुतांस्तदा (Ñ1 °था); Ñ2.3 B Da Dn D4.5 °चिंतयामास पुत्रकान् (Ñ3 B Da वै सुतान्). — $^{c}$) K0.3.4 °वानथ शीतांशुं; K2 Ñ2.3 B Da Dn D4.5 उक्त्वापि च (K2 चापि) स तिग्मांशुं; Ñ1 D1.2 °वानपि (D1.2 °नेष) दीप्तांशुं. — $^{d}$) T1 G2 सस्मार; G1 सद्म न (for स स्म न). K0.3 पुनः पुनरतप्यत; K2 Ñ2.3 V1 B Da Dn D4.5 नैव शर्माधिगच्छति; Ñ1 D1.2 नैव सस्मार तद्वचः.

2 G5 om. from पुत्रार्थे (in 2$^{a}$) up to विमोक्षाय (in 3$^{c}$). — $^{a}$) G1 M5 तप्यमानः सुतस्यार्थे (M5 सुतार्थे स). — Ñ1 om. 2$^{cd}$. — $^{c}$) Ś1 K3.4 D2 तु; K0 G1 च (for नु). K2 कथं नु सरणेशक्ताः; Ñ2.3 V1 B Dn D4.5 कथं नु (B3 Dn D4.5 न्व- or त्व-) शक्ताः शरणे; T G2–4.6 M कथं नु (T1 G2 M3.6–8 त्व-) शक्ताः पतने. Cd cites प्लवने (as in text).

3 G5 om. 3$^{abc}$ (cf. v. l. 2). — $^{b}$) K2 Ñ B D (except D1.2.5) चाशु (for शीघ्रं). Ś1 K1 प्रवाहिनि; T3 G3.4 प्रवाति च. — Ñ1 om. 3$^{cd}$. — $^{cd}$) K1 हि; T3 G4 अपि (for वि-). B (except B6) transp. विमो° and भवि°.

4 $^{a}$) Ś1 Da D1 नु शक्ता; K1 T3 G2–6 नु (G2 त्व-) शक्ताः; K4 corrupt; B3 Dn D4 तु शक्ता; M3 च शक्ता. G1 कथं च सरणेशक्ता. — $^{c}$) K2 Ñ2.3 B D °ष्यति हि शोकार्ता. — $^{d}$) Ś1 K0.1.3 °मभीप्सती.

5 $^{a}$) Ś1 Ñ3 नु शरणे; K0.3.4 नु स(K4 श)रणे; K2 B1 D1 उड्डयने; Ñ2 B5.6 Da Dn D2.4.5 उड्डीयने; B3 S च सरणे (G5.6 संचरणे). — $^{b}$) K2 एतानेव; G1 पतने वा. K4 भविष्यंति ममात्मजाः. — $^{c}$) Ś1 K0.1.3 Ñ1 V1 D1.2.5 °मानानभितो; K2 Ñ2.3 B Da Dn D4 °माना बहुधा; K4 °माना पुरतो; S °माना भीता च (G1.5.6 M6–8 वा). — $^{d}$) Ś1 वाश्यमाना; K0.3.4 B (B5 marg.) Da D2.5 वास°; K1 वध्य°; K2 समंताच्च; S ग(T1 G1 M6–8 श)मनाय. K2 Ñ2.3 B (except B3) Da Dn D1.4 T1 प्र-; D2 वि- (for अभि-). K0.3.4 B1.3 Da Dn1.n3 D2 S (except T1 G1 M3) -धावति.

6 $^{b}$) Ñ3 T3 G3.4 कथंचन; G1 M कथं भवेत्. — $^{d}$) K3 G1 वा सा; Ñ1 माता; D2 चापि; T1 सापि; M3 वा च (for सा च).

7 Before 7, N1 ins. वैशं° उ°; S ins. वैशं°. — $^{b}$) Ś1 K0.1.3 D5 तपोवने; K4 तदा वने; Ñ1 ततो वने.

8 Before 8, V1 ins. लपितोवाच; S लपिता. — $^{a}$) K0.3 Ñ3 B6 Da Dn D4.5 पुत्रेषु (for सुतेषु). K3 G1 M3 (*inf. lin.* as in text). 7.3 अपेक्षा. Ś1 K1 न तेषु पक्षा आयाता; D1.2 न तेषु ते ह्यवेक्षास्ति. — $^{b}$) Ś1 damaged. K2 Ñ V1 B D (except D1.2) यान् (for तान्). T1 G2 गुणवानसि. K1 इति तदुक्तवानसि. — $^{c}$) T1 तेजवंतो; T3 G3.4 महाभागा; G2 ते जीवंतो (for वीर्य°). — $^{d}$) Ś1 K1 विद्यते भयं.

9 $^{a}$) K2.3 N2.3 B D त्वयाग्नौ. N परीताश्च; S दावाग्नेः परिदत्ताश्च (T3 G3.4 °दत्तेन). — $^{b}$) K2 Ñ2.3 B D स्व(Da

C. 1. 8438
B. 1. 233. 10
K. 1. 259. 10

समर्थास्ते च वक्तारो न ते तेष्वस्ति मानसम् ॥ १०
तामेव तु ममामित्रीं चिन्तयन्परितप्यसे ।
ध्रुवं मयि न ते स्नेहो यथा तस्यां पुराभवत् ॥ ११
न हि पक्षवता न्याय्यं निःस्नेहेन सुहृज्जने ।
पीड्यमान उपद्रष्टुं शक्तेनात्मा कथंचन ॥ १२
गच्छ त्वं जरितामेव यदर्थं परितप्यसे ।
चरिष्याम्यहमप्येका यथा कापुरुषे तथा ॥ १३

मन्दपाल उवाच ।

नाहमेवं चरे लोके यथा त्वमभिमन्यसे ।
अपत्यहेतोर्विचरे तच्च कृच्छ्रगतं मम ॥ १४
भूतं हित्वा भविष्येऽर्थे योऽवलम्बेत मन्दधीः ।
अवमन्येत तं लोको यथेच्छसि तथा कुरु ॥ १५
एष हि ज्वलमानोऽग्निर्लेलिहानो महीरुहान् ।
द्वेष्यं हि हृदि संतापं जनयत्यशिवं मम ॥ १६

वैशंपायन उवाच ।

तस्माद्देशादतिक्रान्ते ज्वलने जरिता ततः ।
जगाम पुत्रकानेव त्वरिता पुत्रगृद्धिनी ॥ १७
सा तान्कुशलिनः सर्वान्निर्मुक्ताञ्जातवेदसः ।

---

अ)यं (for त्वया). G5.6 M6–8 च (for हि). — c) T G (except G3.4) तदा. S तेन (M6–8 °षां) (for चेति).

10 a) K2 Ñ2.3 B D (except D5) न तां वाचं (B6 न तावस्ते). — b) V1 S न च. K0 Ñ2.3 B D (except D5) उक्त्वा मिथ्या करिष्यति. — c) K2 चापि; K4 तेपि (for ते च). N3 संसतुं (for वक्तारो). Ñ2 B6 Dn D2.4 समक्षं बंधुकृत्येन; V1 B1.3.5 Da संसतुं चापि ते शक्ता; T1 G5.6 न समर्थस्त्वया वक्तुं (G5 वक्ता; G6 वत्स); T3 G1–4 M समर्थस्त्वं च वक्ता वै. — d) Ś1 K1 V1 B3 Da D5 T3 G (except G1.2) न ते (K1 V1 B3 ड्येतु; T3 G3.4 न हि; G5 नैते) ते स्वस्ति मानसे (B3 D5 T3 G3–6 °सं); Ñ1 D1 न तेषां ज्वलनाद्भयं; Ñ2.3 B1.5.6 Dn D2.4 तेन (Ñ3 B1.5 ड्येतु) ते स्वस्थमानसं.

11 a) B1.3 त्वं (for तु). K0.3 Ñ B D T1 G2 Cd °मित्रां; G1.5 °मित्रं. V1 तामेवमुत्तमां मैत्रीं; T3 G3.4 तामेव मत्सपत्नीं त्वं.

12 a) Ñ1 न्याय्यो; T3 G (except G1) साध्यं. T1 M3 (*sup. lin.* as in text) पक्षपातोपि (M3 orig. हि) न न्याय्यो. — c) T1 G2 पीड्यमाना; G5 वध्यमानम्. Ś1 K1.3 उपाद्रष्टुं; K4 उपस्त्रष्टुं; S (except G1) उप(G2 इव)स्प्रष्टुं. — d) Ś1 K1 D5 शक्तो नात्मा; T1 G2 अशक्तानां; T3 G1.3–6 M शक्यो (G1 शंके) नात्मा. — After 12, T1 G2 repeat 10cd.

13 b) V1 S यस्यार्थं (for यदर्थं). Ś1 K (except K2) Ñ1 D5 यया (Ś1 °था) हीनोद्य (Ñ1 °नो नु; D5 °नाथ) तप्यसे; D1.2 यस्या हेतोर्हि त°. — c) Ś1 K1 मरिष्यामि. B (except B6) अहमन्नैका; T1 G1.2 M5 अहमद्यैव; T3 G3.4 अद्य वै प्रायं; G5.6 अद्य चैवैका; M3.6–8 अहमद्यैका. — d) Ś1 K1 यथात्थ; K0.3.4 D1.2 M यथा कु-; Ñ1 V1 यथोक्ता (for यथा का-). T3 G4–6 M रता (for तथा). K2 Ñ2.3 B Da Dn D4.5 यथा कु(Da न्न)पुरुषाश्रिता.

14 Ś1 K1 S om. उवाच. T1 om. 14a–15a. — a) Ñ1 D1.2 लोकान्. — b) K3 चाभि-; G1 अव-, G2 अपि (for अभि-). Ñ1 D1.2 यथा त्वं मन्यसे शुभे. — d) V1 कृच्छ्रगतिद्; T3 G (except G1) कृच्छ्रतरं. M3.5 तच्छ्रद्धेयतरं मम.

15 T1 om. 15a (cf. v. l. 14). — a) K2 D1.2 भविष्यार्थे; Ñ2.3 B Da Dn च भाव्यर्थे; V1 भविष्येथ; B6 m D4 चरिष्यामि; T3 G3–6 भविष्यं वै; G1 M3.7 भविष्यत्वे. G2 पुत्रान्भार्यां परित्यज्य. — b) K (except K1) Ñ2.3 V1 B Da Dn2 D5 योवलंबेत्स (K0 D5 त्सु-); B6 m लपितेहं सु-; D2 जातं चेतसि; D4 पलितेयं सु-; S यो रमेत स (T1 G5.6 M5 सु-). — c) Ś1 K1 अथ मन्येत तं; K4 अवमन्येत्ततो; S अवमत्य तथा (M3.6–8 पतिं). S लोकान् (M3.6–8 °के).

16 a) K2 Ñ2.3 B D (except D1.2.5) प्रज्वलन्नग्निः. V1 एष प्रज्वलितो ह्यग्निः. — c) K4 D1.2 दृश्यते; Ñ1 दुःखं हि; Ñ2.3 B1.5.6 Da Dn D4 आविग्ने; G2 द्वेषोस्मि; M3 तदेष; M5 तद्द्वेष्यं. B3 च न; D2 इह (for हृदि). V1 दुःखं हि त्वयि संतापं; G1 हृदि सर्वानवेष्यं हि. — d) K4 D5 अनिशं; G5 M5 अशुभं (for अशिवं). K3 Dn1.n3 D4 तथा (for मम). K2 जनयिष्यंति यत्तव.

17 Ś1 K1.3 S om. उवाच. — a) K0.3 Ñ1 D5 अपक्रांते. — b) K2 Ñ2.3 B D (except D1.2.5) पुनः (for ततः). — d) Ñ2.3 B (except B6) D (except Da) G1 जरिता. T1 G6 °ग्रंधिनी; G1.2 (before corr.).3.4 °गार्धिनी.

18 b) Ś1 K1 वियुक्तान्; K2 Ñ2.3 V1 B Dn D4.5 विमुक्तान्; Ñ1 नियुक्तान्. — c) K2 Ñ2.3 B Da Dn D4 रोरूयमाणान् (Dn1.n2 °माणा) ददृशे; D1 °माणान्तान्सर्वान्. — d) Ś1 K1.4 D1.2 सुतान्दृष्ट्वाभवद् (D1 महा-; D2 तदा) वने; K2 Ñ2.3 B Da Dn D4 वने पुत्रान्निराम(Da1 °श्र)यान्;

रोरूयमाणा कृपणा सुतान्दृष्टवती वने ॥ १८
अश्रद्धेयतमं तेषां दर्शनं सा पुनः पुनः ।
एकैकशश्च तान्पुत्रान्क्रोशमानान्वपद्यत ॥ १९
ततोऽभ्यगच्छत्सहसा मन्दपालोऽपि भारत ।
अथ ते सर्व एवैनं नाभ्यनन्दन्त वै सुताः ॥ २०
लालप्यमानमेकैकं जरितां च पुनः पुनः ।
नोचुस्ते वचनं किंचित्तमृषिं साध्वसाधु वा ॥ २१

मन्दपाल उवाच ।

ज्येष्ठः सुतस्ते कतमः कतमस्तदनन्तरः ।
मध्यमः कतमः पुत्रः कनिष्ठः कतमश्च ते ॥ २२
एवं ब्रुवन्तं दुःखार्तं किं मां न प्रतिभाषसे ।
कृतवानस्मि हव्याशे नैव शान्तिमितो लभे ॥ २३

जरितोवाच ।

किं ते ज्येष्ठे सुते कार्यं किमनन्तरजेन वा । C. 1. 8452 B. 1. 233. 24 K. 1. 259. 29

---

Ñ1 V1 सुतान्दृष्ट्वा तदामयान् (V1 तदा वने).

19 K2 om. $19^{ab}$, reads $21^{ab}$ in its stead (om. the latter in its proper place). — $^{a}$) Ñ V1 B D अश्रूणि मुमुचे; T1 सुश्रद्धयैव तत्; T3 G3.4 न श्रद्दधे ततस्; G1 न श्रद्धेयं ततस्; G2 सुश्रद्ध एव तत्. Cd cites अश्रद्धेयं. — $^{b}$) Ñ V1 B D दर्शनात्. — $^{c}$) T G3–6 M6–8 पुत्रांस्तान् (by transp.); G2 पुत्रांश्च. Ś1 K1 V1 एकैकस्यैव सा पुत्रान्; K0.3 Ñ2.3 B Da Dn D2.4 एकैकश्येन (Dn3 °त्वेन) तान्सर्वान् (K0.3 सा पुत्रान्); K2 एकैकं पतितान्सर्वान्; K4 Ñ1 D5 एकैकमेव (Ñ1 °कं चैव) सा पुत्रं; D1 एकैकं श्रावयत्पुत्रं. — $^{d}$) Ś1 K1 B6 T3 G3–5 °मनान्व(T3 G3–5 °न)पश्यत; Ñ1 °माना प्रपद्यते; V1 °माना उपेत्य तत्; G1 °मानांतिके सुतान्. — After 19, G1 ins. 2154*. — K4 S ins. after 19 (G1, after the repetition of $19^{d}$; see below):

2153* जरिता तु परिष्वज्य पुत्रस्नेहादचुम्बत ।

20 $^{d}$) T1 G2 M3.5 ना(T1 अ)भ्यजानंत; G1 अभिजानंति; M6–8 अभ्यजायंत. Ś1 K1 पुत्रकाः; D5 T1 G1 M5.7.8 ते सुताः. K2 Ñ2.3 B Da Dn D2.4 नाभ्यनंदं(K2 Ñ3 B3.5 °जानं)स्तदा सुताः; G5.6 अभ्यजानंत तं सुताः. — S ins. after 20 (G1, om. line 4, after 19):

2154* गुरुत्वान्मन्दपालस्य तपसश्च विशेषतः ।
अभिवादयामहे सर्वे जातपक्षाः प्रसादतः ।
एवमुक्तवतां तेषां प्रतिनन्द्य महातपाः ।
परिष्वज्य च तान्पुत्रान्मूर्ध्न्युपाघ्राय बालकान् ।
पुत्रस्पर्शात्तु या प्रीतिस्तामवाप स गौतमः ।

[ (L. 2) G3.6 आवेदयामहे. — (L. 3) T G2–4 यथाविधि (for महातपाः). — After line 5, G1 reads $21^{ab}$, omitting it in its proper place; then repeats $19^{d}$ (v. l. °मानानपद्यत), which is followed by 2153*. ] — G1 ins. after 20:

2155* गुरुत्वान्मन्दपालस्य इति पादान्तिकं गताः ।

21 K2 reads $21^{ab}$ in the place of $19^{ab}$; G1 reads it after 2154*. — $^{a}$) K0.2 V1 B3 Da लालप्यमानां; T1 G1 M °मानः. K4 चैवैकां; V1 चैकैकं; Da एवैकां; G1 एवैकं. — After $21^{ab}$, G2 ins. 2156* (cf. v. l. 23). — G2 om. $21^{c}$–$23^{d}$. — $^{c}$) K2 Ñ V1 B D (except D1.2) न चैवोचुस्तदा; T1 G4–6 M उच्यते (M3.5 उवाच) वचनं. — $^{d}$) Ś1 K (except K2) तमथो; Ñ1 शिशवः; Da तमर्थं; T1 G5.6 M न स्म ते (T1 वै; G5.6 तैः; M3 सा) (for तमृषिं).

22 G2 om. 22 (cf. v. l. 21). Ś1 K1 S om. उवाच. — $^{a}$) T1 इतरः; G5.6 M (except M3) कतरः. G1 ज्येष्ठः सुतस्तनुतरः. — $^{b}$) K0.3 D2.5 तदनंतरं; K2 Ñ V1 B Da Dn D4 तस्य चानुजः. S (G2 om.) तथा(T3 G1.3.4 M3 °तो; G5.6 °द)नुज्येष्ठ एव च. — $^{c}$) Ñ2.3 B Dn D4.5 चैव (for पुत्रः). — $^{d}$) K0.2.3 Ñ2.3 B D (except D2.5) कनीयान् (for कनिष्ठः).

23 T1 G2 om. 23 (cf. v. l. 21). — $^{a}$) B5 M5 ब्रुवाणं. — $^{b}$) Ś1 K1 किं नु (K1 न) मां; V1 कस्मान्न. A few MSS. मा (for मां). G1 परिभाषसे. — $^{c}$) Ś1 K1 कृतवान्कि च; K0.3 कृतवत्यपि; K2.4 Ñ V1 B D G1 M कृतवानपि (M5 °सि). Ś1 हव्याशो; K0.3 हव्येशे; K2 Ñ2.3 B3.5.6 D हि (D1 यस्) त्यागं; K4 हंन्यासे; Ñ1 B1 वस्त्यागं; V1 दुःखे वै. — $^{d}$) Ś1 K (except K2) अतो; G1 उपा- (for इतो). — T3 G1.3–6 M ins. after 23: G2 (which om. $21^{c}$–$23^{d}$), after $21^{ab}$:

2156* एवमुक्त्वा तु तां पत्नीं मन्दपालस्तथास्पृशत् ।

24 Ś1 K1 S om. उवाच (T1 om. the ref.). — $^{a}$) G1 M ज्येष्ठसुते. K2.4 Ñ V1 B D किं नु ज्येष्ठेन ते (K4 °ष्ठे मुने; D5 °ष्ठे सुते) कार्यं. — T1 (hapl.) om. $24^{bc}$. — $^{b}$) K2 Ñ B Dn D4.5 ते; K3.4 D1.2 G1 M7 च (for वा). Ś1 K0.1 किमनंतरजे तव. — $^{c}$) Ś1 मध्यमे पुत्रे; K1 °मेनैव. K2 Ñ V1 B D किं वा मध्यमजातेन (Da किं मध्यमेन वा कार्यं). — $^{d}$) M3 कनिष्ठे वा (for किं क°). Ś1 तपोधन. K2 Ñ V1 B D °ष्ठेन वा पुनः (V1 Da द्विज).

25 $^{a}$) B1 Dn D2.4.5 यां त्वं; B3 यस्त्वं; B5.6 Da यदि; S यत्र (M6–8 यां च). K2 Ñ2.3 B Dn D4.5 G5.6 M5 सर्वतो. G1 भीतां (for हीनां). Ñ1 V1 Da यथे(Da

C. 1. 8462 B. 1. 233. 24 K. 1. 259. 29 किं च ते मध्यमे कार्यं किं कनिष्ठे तपस्विनि ॥ २४
यस्त्वं मां सर्वशो हीनामुत्सृज्यासि गतः पुरा ।
तामेव लपितां गच्छ तरुणीं चारुहासिनीम् ॥ २५

मन्दपाल उवाच ।

न स्त्रीणां विद्यते किंचिदन्यत्र पुरुषान्तरात् ।
सापत्नकमृते लोके भवितव्यं हि तत्तथा ॥ २६
सुव्रतापि हि कल्याणी सर्वलोकपरिश्रुता ।
अरुन्धती पर्यशङ्कद्वसिष्ठमृषिसत्तमम् ॥ २७
विशुद्धभावमत्यन्तं सदा प्रियहिते रतम् ।
सप्तर्षिमध्यगं वीरमवमेने च तं मुनिम् ॥ २८
अपध्यानेन सा तेन धूमारुणसमप्रभा ।
लक्ष्यालक्ष्या नाभिरूपा निमित्तमिव लक्ष्यते ॥ २९
अपत्यहेतोः संप्राप्तं तथा त्वमपि मामिह ।
इष्टमेवंगते हित्वा सा तथैव च वर्तसे ॥ ३०
नैव भार्येति विश्वासः कार्यः पुंसा कथंचन ।
न हि कार्यमनुध्याति भार्या पुत्रवती सती ॥ ३१

वैशंपायन उवाच ।

ततस्ते सर्व एवैनं पुत्राः सम्यगुपासिरे ।
स च तानात्मजान्राजन्नाश्वासयितुमारभत् ॥ ३२

इति श्रीमहाभारते आदिपर्वणि चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२४ ॥

---

°दि)मान्सर्वतो हीनान्. — b) Ś1 K (except K2) Da D5 आशु (for असि). G5.6 उत्सृज्य विगतः पुरा. — cd) Da transp. लपितां and तरुणीं.

26 Ś1 K1 S om. उवाच. — a) T3 G2–4 न स्त्रीषु. — b) Ñ2 B6 Dn D4.5 अमुत्र. G5.6 पुरुषांतरं; Cd as in text. — c) K2 G1.2.5 सापत्नयकम्; V1 M6–8 सापत्नताम्; T3 G3.4.6 सापत्यकम्. Ś1 K0.1.3.4 सापत्न(K0 °त्नय)कक्रुते. G1 चापि (for लोके). — d) K2 Ñ B D नान्यदर्थं(Da °स्ति)विनाशनं; T1 न वक्तव्यं कथंचन; G1 corrupt. — After 26, K2.4 Ñ V1 B D ins.:

2157* वैराग्निदीपनं चैव भृशमुद्वेगकारि च ।

D5 cont.:

2158* स्त्रीणां सदा हि सापत्नयं भवितव्यं हि तत्तथा ।
[ Posterior half = 26d. ]

27 Ñ1 om. 27ab. — a) V1 सुप्रीता. K2 अपि च; Ñ2.3 B D (except D1.2) चापि; V1 अपीह; T1 ह्यसि. — b) K0.4 T1 °लोके परिश्रुता (K4 °स्कृता); Ñ2 B3.5.6 Dn D4.5 °भूतेषु विश्रुता; Ñ3 B1 D1.2 °लोकेषु वि°. — cd) K2 Ñ B D °ती महात्मानं (D1.2 पर्यचरद्) वसिष्ठं पर्यशंकत (B6 ऋषिसत्तमं).

28 a) Ś1 K1 °भावं भक्तं च; Da °भावमत्यर्थं. — b) V1 B6 भार्याहिते. — cd) K2–4 B1.5 D1 धीरं; S विप्रं (for वीरं). Ś1 K (except K2) सा (for तं). K1 पतिं (for मुनिम्). Ñ3 ऋषीणामपि सर्वेषां वरिष्ठं पुरुषोत्तमं.

29 G1 om. 29ab. — a) K0.3.4 T1 G6 M अप(T1 G6 M5–8 °व)ध्याता च; G2–4 अवध्यानेन; G5 अवध्याते च. — b) N1 V1 T3 G2–4 धूम्रारुण°; G5.6 ततो धूम्रारुणाकृतिः; M5 °समन्विते. — c) K2.4 T1 लक्ष्म्यालक्ष्या; B6 तेजोहीना; G6 अलक्ष्यता. K2 D1.2 T3 G2–4.6 M8 नातिरूपा (M8 °ढा); Da साभिरूपा; T1 अधिरूढा च. V1 लक्ष्यालक्ष्यानि रूपाणि; G5 अलक्ष्या तानि रूपाणि; M5 नालक्ष्या नातिरूपा हि; M6–8 दृश्यादृश्या नातिरूढा. — d) Ś1 K1 इति; K4 M7 इह (for इव). Ñ2 B5.6 Dn D4 पश्यति; Da दृश्यते. D2 निर्मिता सेति लक्ष्यते; T1 तदाप्रभृति ल°; M3 निमित्तादुपल°.

30 a) Ś1 K (except K2) D5 संतप्तं. — b) D1.2 तथा त्वमसि भाविनि. — c) N1 -गता; Da हि ते; G5.6 -गतं (for -गते). Ñ2.3 B1.3.5 Dn D2.4.5 G1.2 हि त्वं; V1 Da1 हत्वा; B6 हि त्वां. D1 इष्टमेवागते हि त्वां. — d) T3 G2–4 सा तथा त्वं. Ś1 K1 सु-; K2 Ñ B Dn D4.5 अद्य (B6 °श्य-) (for च). Ś1 K1 वर्चसे; K2 Ñ V1 Dn D1.2.4 G1.5.6 M3 (*inf. lin.* as in text).5 वर्तते.

31 a) K0.3 S (except T1) न वै; K2 Ñ B D (except D1.2) न हि; V1 मा वै. — b) Ś1 K3 D1 T G2–6 M5.7 पुंसां; V1 स्त्रीणां. G1 कथं कार्यः; M3 पुंसा कार्यः (by transp.). — c) T1 G1.2 अपध्याति. V1 Da अनुध्यायति नो कार्यं. — d) K2 Ñ B D (except D1.2.5) G2 नारी (for भार्या).

32 Ś1 K1 om. 32 (with ref.). K3 D2 S (except M3) om. उवाच. — a) T1 सर्वश्रित्वैनं; T3 G3.4 सहितास्तातं. — b) K0.4 उपासदन्; K2 Ñ V1 B6 Da Dn D4.5 °सते; K4 °लभन्; B1.3.5 °गमन् (B1m °सते); D1 °लभेत्; D2 °लपन्. — c) M6–8 सर्वान् (for च तान्). K2 Ñ V1 B D (except D1.2) सर्वान् (for राजन्). — d) K2 Ñ V1 B D (except D1.2.5) उद्यतः (for आरभत्).

